इति तत्समाधानेनैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः। यदेति प्रातिपदिकानि एवेत्यर्थः। केवलधातुपक्षे तु 'वा' वचने क्रियमाणेऽपि 'कंडवति'इत्यनिष्टप्रसङ्गः। कंड्वावित्यादावुवङादि प्रसंगश्चेति भावः। न च प्रातिपदिकान्येव सन्तु। अत्र च सूत्रे 'करणे' इत्यनुवर्त्तते। तेन कंडूं करोतीत्यर्थे यक्। अन्यदा तु अभावः। तेन कंड्वावित्यादेः सिद्धिः। यगन्तेभ्यस्तु न क्विप् अनभिधानात्। तेन नोवङ् सहितः प्रयोगः। एवञ्च 'वा'वचनं किमर्थमिति वाच्यं 'सुख्यति'इत्यादावतो लोपानापत्तेः क्विपा सम्पदादिक्विपा। यथेष्टमिति वीप्सायां 'यथा सादृश्य' इत्यव्ययीभावः। एकवचनं कुतो नोदाहृतमित्यत आह कंड्वय इति। क्वीति क्वौ लुप्तं न स्थानिवदिति निषेधादिति भाव। अथापीति तदसार्वत्रिकम्। किन्तु क्वौ विधौ नेत्येव सार्वत्रिकमिति भावः। इदं प्रौढ्या। आदिष्टादिति 'क्वौ विधिम्'इति निषेधादित्यपि बोध्यम्। अत एवेति आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाऽभावादेवेत्यर्थः। पुनरुवङ् नेति 'लक्ष्ये लक्षणस्य'इति न्यायादित्वपि बोध्यम्। न चाऽनादिष्टादचः पूर्वत्वं स्थानिवद्भावेन लभ्यं वस्यादेशलाभावात् 'उव' आदेशत्वेऽपि तस्य कार्याभावात्। न च 'सर्वे सर्वपदादेशा' इति कंडू इत्यस्य कंडुवादेशे तस्य स्थानिवत्त्वादनादिष्टादचः पूर्वत्वेन तस्य 'कंडुव' इत्यादेशे कार्ये स्थानिवत्त्वम् 'सर्वे सर्वपदादेशा' इत्याश्रित्याऽचः परस्मिन्नित्यस्याऽप्रवृत्तेः। अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वग्रहणज्ञापकता आकरोक्ता संगच्छते। न च प्रातिपदिकानीत्युपक्रम्य भाष्ये 'वा'वचनात् यदा कंड्वादीनि प्रातिपदिकानीत्यादिना स्वयं तथैव व्याख्यानाच्च अल्लोपस्य स्थानिवत्त्वेपि तत्र परे पूर्वस्य कंडू इत्यस्य धातुत्वाऽभावादुवङोऽप्राप्त्याऽसंगतोऽयं कैयटः स्पष्टञ्चेदं 'लोपो व्योः'इति सूत्रे कैयटे

इति वाच्यम् अतिदेशेनाऽकारे सत्यपि श्रवणाऽभावेन तस्य लौकिकसत्ताविरहात् छिन्नपुच्छश्वदृष्टान्तमूलकेन 'प्राग्दिव्यतोऽण्' इति सूत्रभाष्योक्तेनैकदेशविकृतन्यायेन 'कंडू' इत्यस्य धातुत्वमित्यभिमानात् । तत्रेति औ जस्निमित्तक उवङ् प्राप्नोति एकदेशविकृतन्यायेन 'कंडू' इत्यस्य धातुत्वात् । न चैतन्निमित्ते उवङि अल्लोपस्य स्थानिवत्त्वम् 'क्वौ लुप्तम्' इति निषेधादिति भावः । भाष्ये ह्रस्वस्य पितीति ह्रस्वोच्चारणसामर्थ्याद्दीर्घाऽभावं मन्यते । तद्दूषयन्नाह ह्रस्वयलोपौ चेति । अन्तरङ्गत्वादिति 'अकृतव्यूहपरिभाषा' तु नास्त्येवेति भावः । वेरपृक्तलोपादिति इदं क्वास्तीति चिन्त्यम् । 'लोपो व्योः' इति सूत्रे 'क्वावुपसंख्यानम्' इति वार्त्तिकम् । कर्त्रर्थाऽनवगमादिति यत्र तु कर्त्रर्थाऽवगमस्तत्र भवत्येव, यथा भिषज्यतेः क्विपि भिषक्शब्दे इत्याहुः । केचित्तु इदम्भाष्यमजन्तपरमेवेत्याहुः । सम्पदादित्वादिति तेन वेदनामात्रप्रतिपादनेऽपि कंडूरित्यादि सिद्धमिति भावः । भाष्ये एतानीति कंडूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः । एवमपि कंड्वावित्याद्यर्थं 'वा' वचनं कर्त्तव्यमेवेत्याह तत्तर्हीति । भाष्ये उभयं कंड्वादीनीति उभयमित्यव्ययम् । द्विप्रकाराणीत्यर्थः । उभयाऽङ्गीकारे प्रमाणमाह अतश्चेति । ननु भावक्विबन्तेन वेदनामात्रे कंडूरित्यादिसिद्धिरत आह सत्त्वरूपेति सैवेत्यर्थः । भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीतिः स्यादिति भावः । एवञ्चैतेभ्यो भावे क्विब् नास्त्येवेति तत्त्वम् । स्वार्थे इति नित्यमिति शेषः वाग्रहणाऽननुवृत्तेः । तेन पक्षे कंडवतीत्यादि न । आर्द्धधातुकसंज्ञेति न च साऽपि माऽस्तु कोपि माऽस्तु इति वाच्यम् सुखयतीत्यादावतो लोपार्थं तस्याऽऽवश्यकत्वात् । दीर्घ पाठ इति 'वल्गु मन्तु' प्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थ इति तेषामपि दीर्घो भवति । यत्तु

केषाञ्चिद्दीर्घपाठेन 'वल्गु' प्रभृतीनां दीर्घाऽभावो ज्ञाप्यते तन्न भाष्यविरोधात्, शास्त्रबाधकल्पनाऽपेक्षया प्रातिपदिकत्व कल्पनस्यैव लघुत्वाच्च । एतेन 'ककारेणार्द्धधाकल्लमेव कल्प्यताम्' इत्यपास्तम् धातुकल्पनस्यैव लघुत्वात् ।।२७।।

---

## कमेर्णिङ् ( ३ १।३० )

भाष्ये ङित्करणमपि सावकाशमिति–एवञ्च परत्वाद्वृद्धिः प्राप्नोतीति भावः । यदयमिति मित्त्वनिषेधो ह्रस्वाऽभावफलको वृद्ध्यभावे स्वत एव ह्रस्वसत्त्वाद्व्यर्थः स वृद्धेः सत्तां ज्ञापयतीत्यर्थः । ननु णिङ्च्येत्ययुक्तं प्रतिषेधप्रवृत्तौ ह्रस्वस्यैव भावादत आह णिज्निमित्तेति। तां त्वसौ मन्यते । ह्रस्वे इति वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाऽभावात्तस्याऽप्रवृत्तौ ज्ञापकत्वमेव स्थितमिति भावः । ननु पर्जन्यवल्लक्षणप्रवृत्तेर्ह्रस्वदृष्टावपि प्राप्तह्रस्व वारणेन दीर्घश्रवणाय मित्त्वनिषेधः सार्थक इत्यरुचेराह भाष्ये नैव वेति । प्रत्ययविधावेवेति पारिखीय इत्यादौ । भाष्ये इदन्तर्हि प्रयोजनं यत्तचिण्णमुलोरिति मित्संज्ञाप्रतिषेधस्येति शेषः । चिण्णमुलोरित्यत्रह्रस्वघटितन्यासे दोषमाह भाष्ये णिज्व्यवहितेष्विति । पाक्षिकेति वृद्धेर्वैकल्पिकत्वार्थं 'वृद्धिर्वा'इत्युपसंख्यानं कर्त्तव्यमित्यर्थः । दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानात्सिद्ध्यतीति भावः । भाष्ये दीर्घविधिम्प्रतीति 'न पदान्त' सूत्रे जशादिसाहचर्येण त्रैपादिकदीर्घस्यैव ग्रहणेन 'पूर्वत्राऽसिद्धे न स्थानिवद्' इत्याश्रित्य भगवता 'न पदान्त' सूत्रे तेषां प्रत्याख्यानेन च स्थानिवत्त्वनिषेधाऽप्रसक्तेरिदम्भाष्यमेकदेश्युक्तिरिति नार्थसाधकम् । णिजन्ताण्णिचि उपसंख्यानेन सिद्धम् 'शंशमं शंशामम्' इत्याद्यपि यङ्लुगन्ताण्णमुलि सिद्धम् । न च चिण्णमुलोरित्यत्र दीर्घविधानसामर्थ्यादत्रैपादिके निषेध इति

# संस्कृतगवेषणा ।

—:०:※:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सविधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अवका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंबन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तस्तर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

बालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

## उद्योतनियमः ।

—:*:०:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निःसरिष्यति । भविष्यति मुद्राषट्कं वार्षिकं मूल्यमस्य मुद्रणकर्मणि परिसमाप्ते । ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्धचतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति । अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति ।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस ।)

२

श्रीमते वायुपुत्राय नमः ।

# भाष्यप्रदीपोद्योतः ।

## महामहोपाध्यायनागेशभट्टविरचितः



द्विवेदोपाह्वेन

बालगोविन्दशास्त्रिणा वैद्येन

संशोधितः

प्रकाशितश्च ।

गोपालचन्द्र चक्रवर्ती द्वारा भारतधर्म प्रेस, काशीमें मुद्रित ।

# अभ्यर्थना ।

—**०**—

महोदयाः

अस्ति खलु विदितमेतद्यदधुना वाराणसेयानां विदुषां वैदुष्यम्प्रायः पाणिनिव्याकरणमधिष्ठायैव परिष्कारबलेन सर्वोपरि वरीवर्त्ति । व्याकरणञ्च तन्महर्षिभगवत्पतञ्जलिप्रणीतमहाभाष्यमन्तरेणऽकिञ्चित्करम् । तच्च महाभाष्यमत्यर्थगूढ़ाऽभिप्रायमित्यालोच्य कैयटेन तदर्थबोधनाय प्रदीपो व्यधायि । ततः कालक्रमात् जनानां बुद्धिवैपुल्याऽभावात् परमकारुणिकेन महामहोपाध्यायनागेशभट्टेनोभयार्थद्योतकोद्योतो व्यधायि । किन्तु, अयमुद्योतोऽद्यावधि आपादचूड़ं न क्वापि मुद्रित इति महान् खेदः । केवलमादितोऽध्यायद्वयमुद्योतस्य 'बम्बई' नगरे मुद्रितम् । तृतीयाऽध्यायादारभ्याऽऽसमाप्ति मुद्रयितुमहं बद्धपरिकरः केवलं धार्ष्ट्यादेव सञ्जातोऽस्मि । तत्रभवतो नागेशभट्टविदुषः पुण्यप्रभाव एव मां तारयिष्यतीति मदीयो दृढ़विश्वासः ।

आदर्शपुस्तकञ्चैकमेव 'कश्चिदाय' विक्रमवत्सरलिखितमस्ति । एकमपरम्पुस्तकमद्याभ्यर्थनालेखकाले 'टीकमणि कालेज' संस्कृतपाठशालाया व्याकरणप्रधानाध्यापकेन श्रीमद्विद्वद्वरपूर्णचन्द्राचारिणा श्रीविद्वद्वरानन्तरामशास्त्रिणः सकाशादवाप्य प्रदत्तमिति, उभयोरपि विदुषोराजन्माहं ऋणी भविष्यामि । प्राप्तस्यास्य 'ख' संज्ञा भविष्यति । उद्योतस्यास्य सभाष्यस्य 'क' संज्ञकं पुस्तकं श्रीमद्विद्वद्वररामचन्द्रशर्मणा मम पित्रा संगृहीतन्तत्तु मदीयमेव । एताभ्यां मुद्रितेऽस्मिन्नुद्योते यदि क्वापि स्खलनं स्यात्तर्हि विद्वद्भिः क्षन्तव्यमिति विदुषां वशंवदः ।

बालगोविन्द वैद्यः । मार्गशीर्ष १५ ।

वाच्यम् 'हेड' धातोरहिडि अहीढि इति साधनेन चारितार्थ्यात् । ह्रस्वविधाने हि अहेडीति स्यादिति बोध्यम् । केचित्तु एतद्भाष्यप्रामाण्यात् तत्रस्थवार्त्तिके 'वरेयल्लोपस्वरवर्जम्'इत्यत्र दीर्घोऽप्युपलक्षणीयः ; तदिदानीं दीर्घग्रहणस्य प्रयोजनमिति, अत्रत्य भाष्यस्वारस्यात् हेडधातोर्घटादिष्वप्रामाणिकः पाठः 'ऊकाल' सूत्रस्थभाष्यप्रामाण्याच्च 'वा दान्त' इतिसूत्रस्थभाष्यप्रामाण्याच्च चिण्णमुलोरिति सूत्रस्थभाष्याच्चेति यथाश्रुतभाष्यं रमणीयमेवेत्याहुः । तस्मात्प्रतिषेधः प्राप्नातीति अस्य तन्निषेधो वक्तव्य इति शेषः । अत एव उक्तं वेति 'वा' शब्दः संगच्छते।३०।

---

## आयादय आर्धधातुके वा । ( ३।१ ३१ )

विषयसप्तम्यां विचाराऽनारम्भादाह परेति । आयान्तादिभ्य आर्द्धधातुके सिद्धेऽस्य विध्यभावान्निवृत्तिर्विधेया । तदर्थं तदुपादानं कार्यमित्याह निवृत्तीति । उत्पत्ति शब्दो वेति अस्य प्रयोजनं चिन्त्यं सर्वत्र विधिवाक्ये तदभावेऽप्युत्पत्त्यवगतेः । एकतरपक्षेऽधिककर्त्तव्यतायामेव भाष्यतात्पर्याच्च । क्वचिदनुत्पत्तिशब्दो वेति पाठः । आयाद्यनुवृत्त्यैव सिद्धे 'आयादय' इति पञ्चम्या विपरिणम्यते । आयादिभ्यो यदार्द्धधातुकं तत्र परे गुपादिभ्य आयाद्यनुत्पत्तिरित्यर्थः । परन्तु इदं गुरु इति दिक् । पक्षे निवृत्तेरिति निवृत्तिपदं विनापि सामर्थ्यादिति भावः । क्वचिदिति 'अदिप्रभृतिभ्य' इत्यादौ । क्वचिदिति यथा दीर्घविषये यणः । सूत्रत्रयस्येति 'आयादय' इति पदोपादानसामर्थ्यादित्यर्थः । अन्यथा व्यवहितत्वात् 'कमेर्णिङ्' इत्यस्यैव शेषः स्यात् । पृथक् पाठादिति-तत्सामर्थ्याद्भिन्नवाक्यतया एकवाक्यतया च वाक्यार्थ इति भावः । एकं वाक्यमिति-भाष्यस्य एकं वाक्यमपी-

त्यर्थः। अकारेण—'अप्रत्ययाद्' इति विहितेन। क्तिनो बाधादिति स्त्यधिकारादूर्ध्वं वाऽसरूपविधेरभावादिति भावः। आमि परत इति—यद्यपि लिङ्येवार्धधातुके आयादिनिवृत्तिस्तथापि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम् प्राप्नोति। वस्तुतः परत्वादामि कृते एवैतत्प्रवृत्तिरिति बोध्यम्। तद्भावितेति अत एव लुकि लोपसंज्ञा सिद्धिः। भाष्ये गुप्तिर्जुगोपेति चेष्टसिद्धमिति—आयस्य वैकल्पिकत्वात् तदभावे सिद्ध्यतीत्यर्थः। इदन्तर्हीष्टमिति इदमुपलक्षणम्। क्तिनि कृते आयप्रत्यये गोपायतीत्यनिष्टमपि प्राप्नोतीत्यपि बोध्यम्। अल्लोपस्तु न आर्धधातुकोपदेशे तदभावात्। सार्वधातुके नित्यमिति अत्र नित्यग्रहणमार्थिकार्थकथनं सामान्य सूत्रे 'वा' इत्येवास्य नित्यत्वसिद्धेः। स्यादिभिरिति लादेशप्रवृत्युत्तरं 'स्यतासी' इति पक्षे इदम्। तुल्यं हि निमित्तमिति अनेनान्तरङ्गत्वं निरस्यति। परत्वात्स्यादय इति तथा च 'सकृद्गति' न्यायेनाऽऽयो न स्यादेवेति भावः। न च सार्वधातुके नित्यमित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिक आयो भविष्यति न हि तेनाऽपि विप्रतिषेधः, तस्याऽनैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम् अपवादविषये उत्सर्गाऽप्रवृत्त्या सार्वधातुकविषये तदप्रवृत्तेः। नत्वत्रास्तीति विशेषकृच्छास्त्रं तदभावे न प्रवर्त्तते इति मन्यते। सनाऽस्त्यवकाश इति पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः। विशेषोऽप्यस्तीत्याह कामयत इति। गोपायन्तीत्यत्रापि विशेषं भाष्ये दर्शयति अवश्यं खल्वपीति। यदि तर्हीति एवञ्चाऽनवकाशत्वे तैः 'स्यादि' बाधने गोपायिष्यतीत्याद्यसिद्धिरिति भावः। यथा पुनर्वार्तिककृता सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमङ्गीकृत्य यदि पुनः शपि नित्यमित्युच्यते तदा सर्वदोष परिहार इति भाष्याक्षरार्थः। क्वचिद्भाष्य एव शितीति पाठः। विषयसप्तमीति 'आर्धधातुक' इति सूत्रभाष्योक्तरीत्या जाति

निर्देश इति भावः । सूत्रे 'आयादय' इत्युक्तिरनन्तरस्यैव संवन्ध इति भ्रमवारणार्थेति तत्त्वम् । ३१ ।

---

## सनाद्यन्ता धातवः । ( ३।१ ३२ )

गणपाठनिवन्धना संज्ञा कथमेषामत आह भुवो वादय इति-वदन्तीति वादयः भ्वर्थवाचकाः, क्रिया वाचिन इति यावत् । यथा सूत्र्यादीनां क्रियावाचकत्वन्तथोक्तम् । तेनेति पाठेन । आणवत्यादयः, अर्थेन 'या' इत्येवमादय इत्यर्थः । 'पाठेनेत्यादिः न चैते तत्र पठ्यन्त' इत्यन्तैवात्र भाष्यकारोक्तिः । धातुसंज्ञा सिद्धिमिति सनाद्यन्तेऽपीति शेषः । पृच्छतीति अस्यैकदेशीति शेषः । शब्दान्तरत्वादिति अस्येकदेशी स्थानषष्ठीनिर्देशाद-पूर्वोपदेशाच्च तस्यैवात्र ग्रहणे तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः । पठितसादृश्येन भवतीत्यादि स्थानामिव एषामपि तेनैव धातुत्वेऽप्याह जग्ध्यादीनामिति भाष्यमुपलक्षणमिति भावः । अनेनास्यैकदेशयुक्तित्वं ध्वनितम् । रूढीति तस्या योगाद्वलवत्त्वादिति भावः । न चेमे इति भाष्ये इमे सनादय इत्यर्थः । तत्रेति 'स्थानिवद्' इत्यत्रेत्यर्थः । स्थानिनिवृत्त्येति स्थानषष्ठीनिर्देशादिति भावः । क्रियानिमित्तकस्येति आदेशग्रहणसामर्थ्यादानुमानिकस्येव यौगिकस्यापि ग्रहणमित्याशयः । तदन्तविध्यभावादिति स्थानिवत्सूत्रे विशेष्याऽसन्निधानात्तदभावे आदेशान्तस्यातिदेशेन धातुत्वाऽभाव इति भावः । यद्वा तिवादिविधौ तदभावादित्यर्थः । अत्रोच्यत इति 'धातोः कर्मण' इत्यादेः समानकर्तृककर्मभूतधात्वर्थविशिष्टेच्छायां प्रतिपाद्यायां तत्स्थानेऽर्थाभिमानयोग्यो यद्धात्वर्थकर्मकत्वमिच्छायां प्रतिपिपादयिषितं

तद्भावादिः सनन्त आदेश इत्यादि क्रमेणार्थ इति भावः । तत्तद्गणप्रयुक्ता विकरणास्तु न अदादित्वादेरनतिदेशात् । करणाङ्गे इष्यर्थे कर्तुमित्येतत्समभिव्याहारेण वर्त्तमानस्येषः प्रसङ्गे 'सर्वे सर्वपदादेशा' इति न्यायात्सनन्त आदिश्यत इत्यन्वयः । भगवतो भाष्यकारस्येति एकदेशिन इति शेषः । अनेन इमे तर्हि यद्यपीत्यादिभाष्यग्रन्थ एकदेशिनोरुक्तिप्रत्युक्तिपरतया प्रौढ़िवाद एवेति ध्वनितम् । ३२ ।

---

## स्यतासी लृलुटोः । ( ३ १।३३ )

उत्सर्गापवादधर्मेति स चाऽपवादविषयेऽवश्यं प्राप्तिरूप उत्सर्गस्य धर्मः तदप्राप्तियोग्यविषयाऽभावेन निरवकाशत्वरूपः । अपवादस्य भावकर्मग्रहणाऽनुवृत्तौ उत्सर्गत्वाऽसम्भवादाह भावेति । भाष्ये स्याद्यनवकाशः 'पच्यत' इति कर्मादौ शपोऽप्राप्तेरिति भावः । यत्रेति अनेकलक्षणप्रसङ्ग इति बहुव्रीहिः । अपवादशब्दश्च तद्विषयपरः । अनवकाशोऽपवाद इति भावः । यग्विधौत्विति अन्यथाऽस्ति च सम्भवो यदुभयं स्यादिति वार्तिकमते 'पचति' इत्यादौ शपि कृते तमेव निमित्तीकृत्य यक् स्यादिति भावः । भाष्ये अथवाऽनुवृत्तिरिति एवञ्च तत्तत्सन्निधौ विधानसामर्थ्यान्नास्त्यपवादत्वमिति भावः । लावस्थायामिति भाष्यस्य आदेशोत्पत्तेः प्रागेव 'स्यादय' इत्यर्थः प्रतिभाति । तत्र च शंकते ननु चेति । अनित्यत्वमिति व्यवधानेन धातोः परत्वाऽभावादप्राप्तेरिति भावः । अन्यथेति इदञ्च ज्ञापकं 'अनुदात्तम्यदमेकवर्जम्' इत्यत्र भाष्ये स्पष्टम् । लादेशोत्तरं 'स्यादि' प्रवृत्तौ तु सतिशिष्टस्यादिस्वरनिमित्तकवर्ज्यमानस्वरेण ल सार्वधातुकानुदात्तत्वे सिद्धे पुनर्विधीयमानं तज्ज्ञापकाय सम्पद्यत इति भावः । ये त्विति

एतन्मते 'अन्यत्र विकरणेभ्य' इत्यंशो वाचनिक इति बोध्यम्। प्रतिपदविधानाच्चेति चिन्त्यं निरवकाशत्वाभावादिति कश्चित्। परे तु 'अनुदात्तम्' इति सूत्रे भाष्ये सति शिष्टस्वरबलीयस्त्वे 'सुनुत' इत्यादौ सार्वधातुकस्वरबाधः स्यादिति शंकायां वार्तिककारेणोक्तं 'स्यादिस्वराऽप्रसङ्गस्तासेः परस्यानुदात्तवचनाद्' इति 'परत्वाल्लादेशा' इत्येव च तन्मतम्। अत्राप्यपवादविप्रतिषेधाच्छ्यनादिभिः स्यादिबाधनमिति वार्तिकोक्तपूर्वपक्षस्य तन्मताऽनुसारेण समाधानद्वयमुक्त्वाऽथ वेति तृतीयं समाधानम्भगवतोक्तम्। तस्याऽयम्भावः 'आर्धधातुक' इत्यनुवृत्त्यार्धधातुकत्वावस्थायां 'स्यादय' इत्यन्तरङ्गा इति। विकरणस्वरस्य दुर्बलत्वन्त्वेतत्पक्षे वाचनिकमेव। कैयटोक्तमर्थाऽपेक्षं सार्वधातुकादिसंज्ञापेक्षञ्च बहिरङ्गत्वं न युक्तं तस्याऽत्र शास्त्रेऽनाश्रयणादित्युक्तम्। अत एवाऽत्र विप्रतिषेधो वार्तिककृतोक्तः सङ्गच्छते। न्याय्यमन्तरङ्गत्वं, ऋषिभ्यां न ज्ञातमित्युक्तिरत्यन्याय्या 'काऽन्तरङ्गता' 'लावस्थायां स्यादय' इति भाष्योक्तेर्गर्भस्रावाच्च। अल्पापेक्षत्वात् तिबादिभ्यः पूर्वं स्यादय इत्येवं वक्तुमौचित्याच्चेत्याहुः। ३३।

——

## सिब्बहुलं लेटि (३।१ ३४)

उत्सर्गपदार्थमाह परनिमित्तमनुपादायेति। एवं हि सामान्यविधित्वादुत्सर्गत्वं भवति। भाष्ये सनाद्यन्ताधिकार इति सनाद्यन्त इति येषामधिकारो बुद्धिस्थता तेषु कर्तव्य इत्यर्थः। सिध्यन्तीति लोट्यपि सिप्प्रसिद्धिरित्यर्थः। नेषत्विति प्रयोगे सिप्शयोः समावेशः सिध्यति। विकरणत्वे तु स न स्यादिति भावः। लोट्त्वाच्छन्दसि 'लेटोऽडाटौ' इत्यस्याऽप्राप्तिरिति

बोध्यम् । अत्रोत्सर्गः कर्तव्यः स च सनाद्यन्ते कर्तव्य इति पूर्वपक्षद्वयम् । तत्रान्त्यः खण्डित एव । उत्सर्गता त्वावश्यकीत्याह अवयेति । लिङि सिप्सिध्यर्थमुत्सर्गः कर्तव्य इत्यर्थः । भाष्ये इति हीति 'नेषतु'इत्यर्थं सनादिवर्गे करणे 'नेष्टाद्' इत्यस्याऽसिद्धिः । अत्र करणे 'नेषतु' इत्यस्याऽसिद्धिः । प्रकृत्यन्तरत्वे तु नेष्टादिति नयतेः सिपि सिद्धम् अत्रैव लेटीतिपदरहितसूत्रकरणादित्याशयः । यद्वा 'नेष्टाद्'इत्यत्र विकरणव्यत्ययेन शपो लुक् । नेषतु नेषतादिति दृश्यते इति भाष्यपाठो लोकेऽपीति शेषः । नेष्टादिति दृश्यत इति लेखकप्रमादः । अन्यथा प्रकृत्यन्तराऽऽवश्यकत्वं न दर्शितं स्यात् । भाष्ये आगमाऽनुदात्तत्वादिति अतारिषदित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भावः । सनादिमध्ये इति लेटीति पदरहितमिति भावः । एवञ्च सपः साच्कत्वेन पित्त्वं चरितार्थमिति बोध्यम् । ननु स्थानपरिवर्तनेन सनादिवर्गे करणे फलाऽभावस्य भाष्ये उक्तेराह अत्रैव वेति । अत्राऽपि करणेनेट्सिद्धेरिति तात्पर्यम् । भाष्ये किम्प्रयोजनमिति अकारविषयः प्रश्नः । यदवयासिसीष्ठा इति नन्वत्र सिप्यपि तेन व्यवधानान्निषेधाऽप्रवृत्ताविट् सिध्यत्येवेत्यत आह सवन्तस्याऽङ्गस्येति । 'एकाच' इत्यङ्गस्यैव विशेषणम् । 'उपदेशे' इति चाऽनुदात्तेनैव संबध्यते । उपदेशे योऽनुदात्तस्तत्घटितादेकाचोऽङ्गादिति चार्थः । सवनैमित्तिकत्वात्पूर्वमेव ततश्च लादेशा इति भावः । उच्चारणार्थ इति इत्संज्ञायाम्फलान्तराऽभावादिति भावः । उच्चारणे सहायसम्पादनेन चरितार्थस्येत्संज्ञया लोपेन निवृत्तिरिति बोध्यम् । सिबन्तस्य धातोरिति अङ्गस्येति वक्तुमुचितम् । सीयुटः सस्य षत्वाऽभावश्छान्दसः । ननुचेति तद्घटितादित्यर्थे न मानमित्यभिमानः । नाऽसावुपदेशे इति सिबन्तस्यो-

पदेशाऽभावादिति भावः। एवञ्च सिपैव सिद्धेऽकारोच्चारणं व्यर्थमिति पूर्वपक्षाशयः। सनादिवर्गपाठाऽभिप्रायेणेदम्फलमुक्तमिति समाधत्ते एवन्तर्हीति। अकारोच्चारणसामर्थ्यादुपदेशेऽनुदात्तघटितैकाचोऽङ्गादित्यर्थ इति न दोष इति तत्त्वम्। अनुदात्तादेकाच इति सपि तु परत्वादिडादिषु कृतेषु अतोलोप इति भावः। अथ वेति अत्र पाठे हि तदन्तस्याऽधातुत्वात्तदप्राप्तिरितिभावः। इदमेव युक्तम्। नन्वत्र योऽनुदात्त इकारस्तत्र परतो न लोपः। आर्धधातुके हि सः न च तदनुदात्तमत आह लसार्वधातुकाऽनुदात्तत्वे सतीति। अत्र पाठे प्रत्ययस्वरेणेति सनादिपाठे धातुस्वरेणेति। प्रत्ययस्वरेणेत्येव युक्तं सनादिपाठस्य स्थानत्यागे फलाऽभावेन भाष्ये दूषितत्वात्। पित्करणसामर्थ्यादित्यपि चिन्त्यम्। एतत्प्रदेशे स्याद्येव युक्तम्। या शब्दस्यैवेति। एवञ्च 'यासिसीष्ठा' इत्याद्युदात्तमिति भावः। ननु 'तिङ्ङतिङ' इति निघातः स्यादत आह तिङ्ङ तिङ इति। अत्रेदं तत्त्वम्। अत्रैव पाठो 'लेटि' इति पद रहितः कार्यः। अकारस्तु लसार्वधातुकानुदात्तत्वायोक्तरीत्येट् प्रतिषेधाऽभावाय च। उदात्तनिवृत्तिस्वरवारणाय च पकारः। अन्तरङ्गत्वाच्च पूर्वं सपि ततो विकरणव्यवधानेप्यादेशाः। अत आर्धधातुकोपदेशेऽकारान्तत्वाल्लोपसिद्धिरिति। ३४।

---

## कास्प्रत्ययादाम मन्त्रे लिटि। ( ३।१।३५ )

नन्वत्र 'प्रत्यय' ग्रहणं व्यर्थं 'आम मन्त्रे लिटि' इति योग विभागेन सामान्यत आमं विधाय कास्ग्रहणं नियमार्थं व्याख्येयम्। औपदेशिकधातोश्चेत् 'कास' एवेति प्रत्ययान्ते सिद्धेरिति चेन्न अनेकाच् प्रत्ययान्तग्रहणार्थत्वात्। तेन कादिभ्य आचार

क्विबन्तेभ्य आम्न । ध्वनितश्चेदं हरदत्तग्रन्थे । न च 'एकाच्'प्रत्ययान्तपरमेवास्तु क्विब्ग्रहणेनैव सिद्धे प्रत्ययग्रहणवैयर्थ्यापत्तेः गोपायाञ्चकारेत्यादिभाष्यप्रयोगविरोधापत्तेश्च । 'कास्यनेकाच' इति कासि पदमनेकाज्धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थः । तथा हि एकाचो धातोश्चेत्कास एवेति नियमपरतया तद्व्याख्येयमिति । एवञ्च 'चकास उपसंख्यानम्' इति वार्तिकं सूत्रस्थप्रत्ययग्रहणञ्च न कार्यमिति भाष्यतात्पर्यम् । यथाश्रुतवार्तिकेऽपि प्रत्ययग्रहणस्थानेऽनेकाज्ग्रहणं कर्तव्यमित्येव तात्पर्यमिति हरदत्तानुसारिणः । अन्ये तु 'कासि' इति सप्तमी कास्घटिते सूत्रे इत्यर्थः । अन्यथा समाहारद्वन्द्वे टजापत्तिः । इतरेतरयोगे तु द्विवचनापत्तिः । प्रत्ययग्रहणाऽपनये च न मानम् । सूत्रे प्रत्ययग्रहणन्तु योगविभागनियमकल्पनारूपगौरवपरिहारेण स्पष्टार्थमेव । एवञ्च 'क'शब्दादिभ्य आचारक्विपि 'कामास'इत्यादिरूपाण्येव सत्यभिधाने इत्याहुः । ३५ ।

---

## इजादेश्च गुरुमतोऽनृच्छः । ( ३।१।३६ )

भाष्ये लिण्निमित्ताद्गुरुमत इति गुरुमति लिण्निमित्तत्वं गुरुद्वारा बोध्यम् । द्विवचनबहुवचनयोरिति तयोः कित्त्वादिति भावः । तत्र द्विर्वचनाऽपेक्षया नित्यत्वाद्वैकल्पिक आम् । णलि तु परत्वाद् गुणे नित्य आम्प्राप्नोतीति विशेषः । एतेन 'अत्रापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमवकाश' इत्यपास्तम् । विप्रतिषेधे इति यद्यसम्भवे विप्रतिषेधोऽस्ति चाऽत्रोभयोः संभवबुद्धिरित्युच्यते तदापि विकल्पसिध्या 'उवोष' इत्यस्य सिद्धेरिति भावः । प्रतिपदेति अनवकाशत्वाऽभावेपि पूर्वप्रवृत्ताविदं नियामकमिति भावः । 'उवोख' इति कवर्गद्वितीयान्तपाठ इत्यन्ये । ननु

द्विवचनादौ क्ङिति गुणाऽभावे आमभावाय गुरुमद्वचनं चरितार्थमत आह ईषतुरिति । उपदेशेति एवञ्च 'लिण्निमित्ताद्' इति प्रतिषेधोऽनर्थक इति भावः । इयष्ठेति संयोगपरत्वेन गुरुमत्त्वेऽपि उपजीव्यविरोधान्नामिति गुरुमद्ग्रहणस्येदम्फलमिति भावः । इयजिथेत्येव वा प्रत्युदाहरणम् । ननु यजादीनां कथमिजादित्वं तत्राह लिट्यभ्यासस्येति । तस्मान्नित्ययोग इति 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायन' इत्युक्तेः । प्रकृते लक्ष्यानुसारात्तत्रैव मतुबिति भावः । ननु वचनशब्दस्य व्याख्यानपरत्वेऽप्युपदेशग्रहणमित्यसंगतमत आह उपदेशग्रहणेति । तुग्ग्रहणमिति सामान्यापेक्षं ज्ञापकमित्यर्थः । ऋच्छत्यामोऽभावादाह प्रतिषेधेति । तुग्निमित्ते ह्याद्यर्थे ज्ञापिते ततोऽपि प्राप्तस्य प्रतिषेधार्थ इति भावः । तस्मादाम एवेति यद्यप्यङ्गभूतपरिभाषाबाध एवोचितस्तथाऽपि तस्या वाक्यार्थबोधप्राक्कालोपस्थितिकतया वैयर्थ्यस्य च लक्ष्यसंस्कारवेलायामुपस्थितत्वेनाऽसञ्जातविरोधन्यायेनाऽऽम्बाध एवेति भावः । एवञ्च तुग्निमित्तेत्याद्यर्थे ज्ञापितेऽप्यस्य सार्थक्यं दुरुपपादम् । ऋच्छेरामभावस्य प्रकारान्तरेण सिद्धेरिति नैतज्ज्ञापकमिति तात्पर्यम् । ननु स्थानिकार्यस्याऽऽदेशे जायमानत्वेऽपि आदेशकार्यस्य कथं सामर्थ्यादपि स्थानिनि प्रवृत्तिः । तत्र स्थानिवद्भावस्यैवाऽत्रोपायाभावादत आह ऋ गतीति । शितीति स्वतन्त्रस्य तु आमा व्यवधानाल्लिट्परत्वाऽभावो बोध्यः । ननु परत्वाद्यणि द्विर्वचनेऽचीत्यनेन द्वित्वे स्थानिवद्भावाद् द्वित्वे कृते पुनरादेशरूपेणैवोत्तरखण्डस्याऽवस्थानादभ्यासस्योरति हलादिःशेषेऽत आदेरिति दीघ आरतुरित्यादिसिद्धिरत आह यणादेशादिति । ननु 'यण् नित्य' इति कथं विप्रतिषेधोऽतआह सतीति । द्विर्वचनेऽचीत्यस्मिन्निति शेषः । द्विर्वचनेऽचीति सूत्रे स्थानिवद्भावपूर्व-

विप्रतिषेधयोः किं ज्याय इति भाष्योक्तेः पूर्वविप्रतिषेधारम्भे तदभावस्य लाभादयम्पूर्वविप्रतिषेधो नित्यानामपि बाधक इति वक्तुं युक्तम्। इत एवाऽरुचेराह अथ वेति सति वा यणीति द्वित्वे रूपातिदेशेन द्वित्वे जाते पश्चाद्यथायथं योग्यशास्त्रप्राप्तिरिति दीर्घ एवेति भावः। अन्तादिवदिति उत्तरखण्डस्यैव क्रियावाचकत्वेन धातुत्वमिति भावः। समुदायस्य धातुत्वे त्वेतदसङ्गतिः स्पष्टैवेति बोध्यम्। स्थानिवदतिदेशस्यापि सम्भवादाह स्थानिवद्भावाद्वेति। स्थान्यलाश्रयत्वाऽभावाच्चाऽनल्विधाविति प्रतिषेधाऽभावः स्थानिवत्त्वप्राप्त्युपपादकमुभयादेशस्येत्यादि। भाष्ये गुणे पुनः सतीति। ननु परत्वात्कृतेऽपि गुणे द्विर्वचनेऽचीति रूपातिदेशाद् 'ऋ'शब्दस्यैव द्वित्वमिति को विशेष इति चेन्न यत्राऽऽदेशे कृते एकाच्त्वादिव्याघातप्रयुक्ता द्वित्वाऽप्राप्तिस्तत्रैवातिदेशप्रवृत्तिरित्याशयात्। इह तु उरदत्त्वमिति आसप्तमसमाप्ति अङ्गाधिकारादिति भावः। इदम्प्रौढ्या कैयट आह इत्यनुपदमेव स्फुटं भविष्यति। वव्रश्चेति-अत्राऽभ्यासरेफस्य सम्प्रसारणे उरदत्त्वे तस्याऽङ्गाक्षिप्तपरनिमित्तत्वेन 'न सम्प्रसारणे' इति वस्य तन्निषेधे स्थानिवत्त्वं सिध्यतीत्यर्थः। ऋकारनिर्देशे लिङ्गमप्याह बहुवचनेति। धातोरेवेति गत्यर्थस्य न तु तदन्तविधेरित्यर्थः। भाष्ये तदन्तरेणार्त्तेरिति वार्णपरिभाषयेति भावः। सा समानाश्रयविषयैवेति तु न मानाभावादिति भावः। ननु पूर्वमुरदत्त्वेऽपि हलादिःशेषेऽत आदेरिति दीर्घे परखण्डे यणादेशं बाधित्वाऽतोगुण इति प्राप्नोतीत्यसिद्धिरत आह अन्तरेण ऋच्छिग्रहणमिति। ऋकारनिर्देशेनेति भावः। अयमेव अथाऽपि कथञ्चिदिति भाष्यस्याऽऽशयः। ननु गुणविधिस्थऋच्छिग्रहणेन ज्ञापकेन ऋच्छेरामोऽप्राप्तौ 'अनृच्छ' इत्यस्य ज्ञापितेऽपि चारितार्थ्याऽ-

भावात्कथं ज्ञापकत्वमत आह अनृच्छ इतीति । तत्सदृशागम-वद्धातुलक्षणायैव तदुपादानमिति भावः । वाक्यभेदश्च बोध्यः । तेनैधादेः सिद्धिः । अनन्यार्थ इत्यनेन भाष्ये ध्वनितमेतत् । अथ वेति इदं प्रौढ्या । लेलुङ्केति अव्यवधानविघातश्च बोध्यः । एवञ्च 'अनृच्छ' इति 'लिण्निमित्ताद्' इति च प्रत्याख्यातम् । ननु 'उपदेश' इति व्याख्याने 'ईत्' 'ऊत्' शब्देभ्य आचारक्विपि आम्न प्राप्नोति तत्प्रत्याख्याने च प्राप्नोतीति चेन्न प्रत्ययान्तत्वेनैव तत्रामप्रसिद्धेरित्याशयात् । हलन्तेभ्य आचारक्विपोऽभावाच्च । भाष्ये वाच्य ऊर्णोरिति तत्र यङि भावातिदेश आमिटोरभावातिदेश इति बोध्यम् । तेनेजादेरिति अनेकाच इति चाम्नेति बोध्यम् । उकारप्रश्लेषेऽपि तत्सामर्थ्याद्द्वाद्यसामान्यचिन्तया सर्वस्याप्याम: प्रतिषेध इति बोध्यम् । तेनोकारान्तस्येति ऋच्छिसाहचर्यादौपदेशिकस्येत्यर्थः । तदाह ऊर्णोते रिति ॥ ३६ ॥

---

## उषविदजागृभ्योऽन्यतरस्याम् । ( ३।१।३८ ! )

उषिजागृसाहचर्यात्परस्मैपदिन आदादिकस्यैव विदेर्ग्रहणम् । अकारलोपाऽभावाच्चेति गुणाऽसिद्धिर्दोषोपलक्षणमिति भावः । ननु लिटोप्युपस्थित्या तत्सन्नियोगेनापि विधानं स्यादत आह आम इति । निपातनाद्वेति भाष्ये सूत्रेऽदन्तत्वनिपातनादित्यर्थः ॥ ३ ॥

---

## भीह्रीभृहुवां श्लुवच्च । ( ३।१।३९ । )

न लुमतेति लुमच्छब्दवति कार्ये सति अङ्गस्य कार्यं नेत्यर्थ

इति मन्यते। प्रत्ययेति लुमता शब्देन लुप्ते प्रत्ययलक्षणेनाऽङ्ग कार्यं नेति तदर्थ इति भावः॥ ॥ ३९ ॥

---

## कृञ्चाऽनुप्रयुज्यते लिटि। ( ३।१।४० )

अनुप्रयोगाय अन्यधात्वनुप्रयोगस्य वारणाय च सूत्रमावश्यकमित्यत आह अन्तरेणाऽपीति। लिट्परस्य कृञ इत्यस्याऽनुप्रयोगः सिद्ध इत्यनेनाऽन्वयः। आमन्ताद्धि क्रिया विशेष एवेति पाठः। कालविशेष इति पाठे कालेन विशेष्यते यः स क्रियारूप इत्यर्थः। सामान्य इति सामान्यस्याऽपि विशेषे पर्यवसानात्तदुत्पन्नतिवादिनापि विशेषसंबन्धिसाधनाद्यवगतिरित्यर्थः। भ्वस्त्योरिति तयोरपि सामान्यवाचकत्वादिति भावः। भाष्ये दूषयति उच्यमानेऽपीति परस्मैपदेनाऽपीति सूत्रन्यासेन त्वदुक्तातिशयाऽलाभादिति भावः। सम्पदश्चेति चेन 'सं' रहितपदधातोरपीत्यर्थः। एतेन 'सम्पदो' धात्वऽभावात् कृभ्वाद्यसाजात्येन प्रत्याहारे न सन्निवेश इत्यपास्तम्। मध्यवर्त्तिनः सजातीया एव ग्राह्या इत्यर्थे मानाऽभावाच्च। विद्यतीति विद सत्तायामिति स्मरणादिति भावः। भाष्येऽर्थाऽभावाच्चेति एधामित्यादिना पच्यादेरन्वयाऽयोग्यत्वात् एधामित्याद्यग्रे स्वस्याऽनुप्रयोगोऽसम्भवी तत्राप्यामः प्राप्तेः। कृभ्वादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोगः; तदाह भाष्ये न च सामान्येत्यादिना। द्वयोरेकार्थयोरिति आम्विषययोरित्यर्थः। द्वितीयप्रयोगेऽप्यामः प्राप्तेरिति भावः। न च पाचयामीत्युत्तरं पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोगः स्यादिति वाच्यम् उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तेरिति भावः। न च निवृत्तप्रेषणकृञो णिचि

कारयामीत्यतः पचेरनुप्रयोगः स्यादिति सामान्यविशेषवाचिनो-रित्यपि वक्तुं युक्तमत आह सामान्यवाचिनश्चेति। वर्तमान विहितस्य लटः कथं भूते प्रसक्तिरत आह भूतपूर्वामिति। न च साम्प्रतिकेति वर्तमानसामीप्ये लट्यपि न विवक्षितमुख्य भूतत्वप्रतीतिः स्यादिति भावः। खादिरे खदिरविक्र रे यूपे ❀। सादृश्यादिति एवञ्च बहुखदिराऽवयवसामान्ययोगो बुर्बुरस्येति। तत्र खदिरबुद्ध्युत्पादनेन खदिरारब्धैव क्रिया निर्वाहिता भवति। पालाशे तूपादीयमाने तत्र खदिरबुद्ध्यनुत्पादात्खादिरेणो पक्रान्ता क्रिया निर्वाहिता स्यादिति न तदुपादानमिति भावः। अश्वेषु चेति। एवञ्च तथा प्रयोगेऽसाधुतेति वदन्ति। वार्त्तिके 'वा' शब्दो विकल्पार्थकोऽपि पूर्वत्र प्रयोजनानां खण्डितत्वात् तदर्थे भाष्यकृता व्याख्यायते विपर्यासनिवृत्त्यर्थं तर्हीति। भाष्ये अन्वेवेति पश्चादव्यवधानेनेत्यर्थः॥ ४०॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्य
प्रदीपोद्योते तृतीयस्य प्रथमे तृतीयमाह्निकम् ॥३॥

---

## च्लि लुङि ( ३।१।४३ )

नन्वश्रवणेऽपि क्विवादिवत् कार्यार्थः स्यादत आह नापीति। उत्सर्गपदस्यापवादप्रतियोगिन्येव प्रसिद्धेराह स्थानात्यर्थ इति।

---

❀ 'यूप्पे' इति कैयटप्रतिपादित 'भ्रेष' विवरणम्। 'भ्रेष' शब्दश्चरेफविहीनो मत्वमवाप्य मेषतां याति। स चाऽयं 'मेषो' हिन्दीभाषायां 'खूटा' इति नाम्ना प्रसिद्धः। अन्यभाषाभाषिणो वदन्ति 'नाऽयं हिन्दीभाषायाः शब्द' इति। अहन्तु, अपभ्रंशपर-म्परयाऽयं 'भ्रेष' एव मेष इति मन्ये। अनेन मदीयोऽयं 'मेष' इति वदन्तो यवनाः परास्ता इति। सम्पादकः।

ननु च्ल्युत्सर्ग इत्यनुपपन्नं च्लेरन्यस्योत्सर्गस्याऽभावात्। कर्मधारये तु उत्सर्गशब्दस्य पूर्वनिपाताऽऽपत्तिरत आह च्लेरिति। च्लिरुत्सर्ग इति भाष्यन्तु फलिताऽर्थपरम्। क्वचित्तु भाष्येऽपि च्लेरित्येव पाठः। 'मन्त्रे' इति सूत्रे त्रयाणामपि चङङ्सिचां लिग्रहणेन लुग् यथा स्यादिति प्रयोजनं च्लिकरणस्य। अन्यथा सिच इत्यनुवर्तेतेति चङङोर्दोषः। लित्वं तु तेषां स्थानिवद्भावेन। अन्तरंगानपीति न्यायस्त्वत्र नास्ति अनित्यत्वात्। तेन मन्त्रे अधान्' 'अधुः' इत्युभयसिद्धिः। तद्ध्वनयन्नाह त्रयाणामिति। चङङोश्चेति कर्तव्यं चेन सिचोऽनुकर्ष इति पदत्रयं कार्यमिति भावः। एतेन चङ्ग्रहणं व्यर्थं धयतावेव हि तदुपयोगः। तत्र सिचो लुकैव सिद्धमित्यपास्तम्। 'अधान्' इत्यसिद्ध्यापत्तेः। आकारान्तत्वादिति 'मन्त्रे घस' इति सूत्रप्राप्तिनिमित्तकथनम्। भाष्ये च्लिसम्प्रत्ययथार्थ इति अनिटम्प्रति च्लेर्विशेष्यत्वेन यः सम्प्रत्ययस्तदर्थः। यस्मादन्यत्रेति अस्य तर्हीं त्यादिः। यस्माद्धातोर्लुङ्भिन्ने प्रत्यय इत्तर्थः। लुङि योऽनिडित्याश्रयितुमशक्यमित्याह लुङादेशानामिति। ततश्चेति विषयान्तरगताऽनिट्त्वाश्रयणाच्चेत्यर्थः। अथाऽपीति इटोऽभावोऽनिट् तस्मान्मतुपः सौत्रत्वाल्लुगिति भावः। यदात्विडिति तदा निर्दिश्यमानपरिभाषया इड्रहितस्य सिजित्यर्थः। धातोरित्यस्य विहितविशेषणत्वाश्रयणान्निर्दिश्यमानस्य व्यवहितत्वमिति न शंक्यम्। अगूहीदिति 'ह्म्य' इति वृद्धिनिषेधः। गुणे 'ऊदुपधाया' इत्यूत्त्वम्। आर्धधातुके विवक्षिते घस्लादेशविधानादाह लुङीति परसप्तमीत्यभिधानेनेदमिति भावः। ननु च्लिर्न कार्यः, चङ्क्सादयश्च 'सिच' एवाऽऽदेशाः कार्याः। च्लेरित्यस्य स्थाने सिच इति कार्यम्। 'मन्त्रे' इति सूत्रे च्लेरिति न कार्यं सिच इत्यनुवृत्त्यैवेष्टसिद्धेरिति नैते दोषा इति चेन्न 'अपुषन्'

इत्यादौ जुसापत्तेः। दोषान्तरमप्याह तथा मन्त्रे इति। ननु लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति प्रत्ययलक्षण-प्रतिषेधात् कथं स्वरप्राप्तिरत आह लुमतेति। *तस्य 'सर्वाऽऽम-न्त्रितसिज्लुक्स्वरवर्ज' इति निषेधादिति भावः। अस्य 'आदिः सिच' इत्यस्य 'सर्वामन्त्रितसिज्लुक्स्वरवर्जम्' इति निषेधादिति भावः। अस्य 'आदिः सिच' इत्यस्य सर्वामन्त्रितसिजलुक्स्वर वर्जम्' इति तत्रोक्तत्वादिति भावः। तदनुबन्धकेति चकाराऽ-भावेऽस्यैकानुबन्धकत्वादिति भावः। तत्रेति 'आम' इति सूत्रेऽनु-वर्त्तमानेन लेरिति पदेन लिशोऽपि ग्रहणं सिध्यतीत्यर्थः। तदेव मन्त्रे इति 'गातिस्था' इति सूत्रे लिग्रहणे यदि 'अन्तरङ्गान्' अपीति न्यायेन च्लावस्थायां लुक् तर्हि 'अगुः' इत्यादौ 'सिज-भ्यस्त' इति जुस् न स्यात्। 'मा हि गाताम्' इत्यादौ 'आदिः सिचोऽन्यतरस्याम्' इति स्वरश्च न स्यात्। तस्मादन्तरङ्गान-पीति न्यायाऽनाश्रयणेनाऽऽदेशे कृते स्थानिवद्भावेन लित्वाल्लुगे-षितव्यः। तत्राह भाष्ये धेटश्चातुःशब्द्यमिति। तद्ध्वनय-न्नाह लेरादेशेष्विति। आकारलोपे इति तिपो हल्ङ्यादि-लोपे भष्भावे चेत्यपि बोध्यम्। अधदिति भाव्यमिति पाठः। नैव इति अङ्गकार्यत्वादत्र 'न लुमता' इति निषेधो न तु द्वित्वे इत्यभिमानः। विध्यर्थमिति चङो लुकीति शेषः। भाष्ये अभूवन्निति चङ्लुकि विध्यर्थत्वे सम्भवति नियमार्थत्वं न स्यादिति 'सिजभ्यस्त' इति जुस् स्यादित्यर्थः। प्राप्तेष्वादेशे ष्विति च्ल्यादेशेष्वित्यर्थः। अकृतेष्वादेशेष्विति पाठान्तरम्। नन्वेवं 'अगुः' इत्यत्र जुस् न स्यादत आह आत इत्येतदिति। नियमस्याऽसम्भवादित्यर्थः। न च च्ल्यभ्यस्तेति कार्यं तेन चङ्लुक्यपि जुस् च्लिपदानुवृत्त्या 'आत' इत्यस्य नियमत्वादभू-वन्नित्यपि सिद्धमिति वाच्यम् अयुक्षन' 'अवोचन्' इत्यादौ

क्सादिभ्योऽपि परस्य जुसापत्तेः। तस्मान् मंत्रे' इति सूत्रार्थे च्लिर्न कार्य इति सिद्धम् । 'आम' इत्यत्राऽपि लेरित्यस्य नोपयोगः प्रत्ययमात्रस्य तेन लुग्विधानात् । ननु धातुरपि 'न विद्यते इड् यस्माद्'इति व्युत्पत्त्याऽनिट्पदवाच्योऽत आह मत्वर्थे इति । अवयवाऽवयविभावादिरूपे षष्ठ्यर्थे इत्यर्थः । भाष्ये अनिमित्तं वा इट् इति न विद्यते इट्कार्यं यस्येत्यर्थः । पञ्चम्यर्थेऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह न वा तस्मादिति । मत्वर्थ इति कर्मकर्तृवचनेन 'अप्रथमाया' इति च वार्तिकोक्तेरिति भावः । अस्मिन् विषये लुङ्रूपे विषये, तत्राऽनिट्त्वस्याऽव्यभिचारात् । विषयान्तरम् प्रत्ययान्तररूपम् । ऊदिद्भ्यो नेति आर्धधातुकतासादिविषये पक्षे सेट्त्वादिति भावः । नित्यः क्स इति 'यस्य विभाषा' इति निष्ठायामनिट्त्वादिति भावः । इष्यते इति अनेनैषोऽपि तत्र पक्षे दोष इति सूचितं निष्ठाग्रहणपक्षे । भूयिष्ठेभ्य इति सूचितं दोषमाह इष्विति । भाष्ये वलाद्यार्धधातुक इति अयं भावः, अनिटो धातोरित्युक्ते क्वेति विषयविशेषाऽऽकांक्षायां लुङ्परवलार्धधातुके यदा योऽनिडिति कालविशेषावच्छिन्नो विषयविशेषो ग्रहीष्यते लक्ष्याऽनुरोधादिति तदाऽऽह गुहादय इति । सामान्य इति 'आर्धधातुक' इति विषयसप्तमीति भावः । यत्र त्विति 'मा हि दाताम्' इत्यादौ सिच एव चित्त्वेनेति एतच्चोत्तरसूत्रे स्फुटम् ॥ ४३ ॥

---

## च्लेः सिच् ( ३।१।४४ )

साधारण इति तन्त्रेणेति भावः । पक्षान्तरमाह आगन्तुना वेति तथा च सकारमात्रे तात्पर्यमिति भावः । पृथगिति अन्यथा परस्मैपदयोरित्येव वदेत् । सेति वर्णमात्रम् । स च परस्मैपद-

साहचर्याद्ङ्गाधिकाराच्च प्रत्यय एव ग्रहीष्यते । धातोरुदात्तार्थ इति लादेशनिमित्तनिघाते जाते पुनरुदात्तार्थ इत्यर्थः । भाष्ये तत्र प्रत्ययाद्युदात्तत्वेनेति सिज्विधावुपस्थिताद्युदात्त इति शास्त्रस्याऽनच्कत्वात् तत्र वैयर्थ्येन तदुत्तरकालमिटि स्वरविधायकतेत्यर्थः । अनच्कविषये बाधेन लाघवात् तदसंबन्ध एवेति 'धातोः' इत्याद्येकवाक्यतापन्नशेषनिघातो भविष्यतीत्युत्तरयति आगमा इति । एवञ्च तद्बाधेनोदात्तत्वाय चित्वं सार्थकमिति भावः । स्थानिवद्भावप्राप्तमिति 'स्थानिनि दृष्टस्यैवाऽतिदेश' इत्यत्र न मानं किन्तु तत्र सम्भावितस्याऽपीति भावः । कार्यातिदेशेऽतिदेशेनैव कार्यविधानात् परत्वेन धातोरित्येकवाक्यतापन्नशेषनिघातबललभ्येनाऽऽगमाऽनुदात्तत्वेन बाध्येतेति तात्पर्यम् । न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधो 'मन्त्रे' इति सूत्रे लेरिति सामान्यग्रहणार्थत्वात् । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्न लिटः । ततश्च 'आम' इति सूत्रेऽस्याऽसंबन्धः स्यात् । ततश्च परत्वाऽन्तरङ्गत्वाभ्यां तिबादिषु सत्सु लुकि प्रत्ययलक्षणेन तिङन्तत्वाद्ध 'देवदत्तः कारयाञ्चकार' इत्यत्राऽऽमन्तस्य निघातः । ततः परस्य चाऽनिघातः स्यादिति 'आम' इत्यत्र 'लेः' इत्यनुवर्त्तनीयमित्यभिमानः । यदि तु 'अन्तरङ्गानपि' इति न्यायेन तिबादिभ्यः पूर्वमेव लुक् तदा न च्लौ चस्य प्रयोजनमिति तत्सामर्थ्यादेवाऽन्तोदात्तत्वं सिद्धम् । तस्मात्पूर्वाचार्याऽनुसारेण 'सिचि' 'च्लौ' वा चकारोच्चारणमिति सूत्राशयः । अपवादविप्रतिषेधादिति स्थानिवद्भावेन हि चित्त्वमात्रमतिदिश्यते स्वरस्तु स्वशास्त्रेणैवेति भावः । न हि प्रत्ययस्वरस्यैताविति एवञ्च 'नाऽप्राप्ते प्रत्ययस्वर' इत्यारभ्य स्थानिवद्भावादपि प्राप्तिस्तामपि बाधेत इत्यन्तग्रन्थो भाष्यपुस्तकेषु प्रायेण दृश्यमानोऽप्यग्रन्थ इति भावः । आग-

माऽनुदात्तत्वेनेति बाध्यसामान्यचिन्तयेति भावः। वस्तुतस्तु 'लवितव्यम्' इत्यादौ प्रत्ययसन्नियोगेनाऽऽद्युदात्तत्वे कृते पश्चादिट् जायमानोऽस्वरकः स्यादिति सामान्यतः स्वराऽप्राप्तिविषये तस्य चारितार्थ्याद्बाधकत्वोक्तिश्चिन्त्या। सुतरां सर्वस्वरस्य यदि शेषनिघातेन तत्राऽनुदात्तत्वसिद्धिरित्युच्यते तदा तद्वचनमेव व्यर्थं नास्ति चेति 'आद्युदात्तश्च' इति भाष्ये ध्वनितम्। चित्त्वन्तु धातुस्वरेण प्रत्ययस्वरेण चैकवाक्यतापन्नशेषनिघातेन प्राप्तानुदात्तत्वबाधनार्थं कार्यमेव। ननु सिचि जायमानोऽपि परस्मिन्निमित्त एव जायतेऽत आह सिचः परमिति। भाष्ये न लोपस्याऽसिद्धत्वादिति—'असिद्धवदत्राऽऽभाद' इत्यनेनेत्यर्थः। बहिरङ्गत्वादिति। ननु 'त'शब्दनिमित्तलोपे तस्य बहिरङ्गतयाऽसिद्धत्वादाह 'त' इत्यादौ ह्रस्वादङ्गादिति न स्यात्। सिज्निमित्तत्वे तु असिद्धत्वाऽभावात्सेत्स्यतीति चेन्न त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेः। भाष्ये अथाऽप्यनेनेति एकदेशयुक्तिः। एकदेश्येवाह कथं च्लेरिति। ततश्चेति स्वरस्य सिचश्चित्त्वेनैव सिद्धिरिति भावः। भाष्ये चित्करणं प्रत्याख्यायत इत्यस्य इत्संज्ञाप्रत्याख्यायत इत्येव तात्पर्यम्। चङादय इति 'णिश्रिद्रुस्रुभ्य' इत्यादिपञ्चमीनिर्देशेन विधानादित्यर्थः। 'णिश्रिद्रुस्रुभ्य' इति विहितविशेषणमिति भाष्याशय इत्यन्ये। भाष्ये च ङिति चिण्न्यायेनाऽत्रापि चस्येत्त्वाऽभावेऽनेकालत्वात्सिद्धमित्यत्र प्रश्लेषफलं चिन्त्यम् उपायान्तरपरमेतदभ्युपेत्यापीत्संज्ञालोपयोः पूर्वप्रवृत्तिं, प्रवृत्तमिति बोध्यम्। ननु अन्त्यस्याऽयं स्थाने भवन्निति भाष्यमनुपपन्नं 'आदेः परस्य' इत्यस्य प्राप्तेः प्रत्ययादित्वेनेत्वसिद्धेरत आह चिण्भावेति। विहितेति पदादिभ्यो विहितस्य च्लेरित्यर्थे परशब्देन विधानाऽभावादादेः परस्येत्यस्याऽप्रवृत्तिरिति भावः। भाष्ये प्रत्ययः

स्यादिति प्रत्ययाऽधिकारे पाठेऽपि अन्वर्थसंज्ञालाभार्थाऽभावात्, न हि प्रत्ययाऽवयवस्तदर्थवानिति भावः । ननु धात्वन्तःपातिनोऽपि श्नमोऽर्थवत्त्वमिवाऽन्याऽवयवस्याऽप्यर्थवत्त्वमस्तु समुच्चित्य चाऽवयवसमुदाययोर्द्योतकता । तद्वदेव चाऽर्थाऽधिकारात्प्रत्ययत्वेपि न बाधकमिति चेन्न एकदेशयुक्तित्वेनाऽदोषात् । तद्ध्वनयन्नाह एष चेति । एतेन नाऽनुबन्धकृतमनेकाल्त्वमिति सर्वादेशत्वं दुर्लभमित्यपास्तम् । वार्तिककारस्येत्युक्त्या स्वोक्तरीत्या चकारस्य च्लेरवयवंवाऽप्रत्याख्यानमिति सूचितम् । च्लावेव हलादिलक्षणेऽपि 'अस्यार्त्तीद्' इत्यस्याऽसिद्धिरूपं दूषणान्तरमाह अपि चेति । तृपद्यांशे फलं दर्शयति भाष्ये यस्य खल्वपीति ॥ ४४ ॥

---

## शल इगुपधादनिटः क्सः ( ३।१।४५ )

लक्षणदोषमिति असम्भवरूपमित्यर्थः । भूतपूर्वेति विशेषणसामर्थ्याद्धि तदाश्रयणम् । लक्ष्याऽसिद्धिरिति सर्वत्र गुणश्रवणापत्तिरित्यर्थः । ननु क्सस्य किच्वसामर्थ्यात्पर्वमपि गुणो न भविष्यतीत्यत आह कित्करणन्त्विति । वत्से वदेः स औणादिकः । क्सस्य गुणाऽपवादत्वे हेतुमाह भूतेति । ननु भासावित्यादावपि लोपापत्तिरत आह प्रत्ययलादिति । 'वत्सा' इत्यादौ दोषवारणायाऽऽह उणादीनामिति । तृणसावित्यादौ दोषस्तु 'लुग्वा दुह' इत्यत्र 'इतः' क्सपदाऽनुवृत्तेरर्थाधिकाराऽनुरोधेन दुहादिषु यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणाद्वारणीयः । अत एव दृशेः क्से तादृक्षावित्यादौ न दोष इति किच्वसामर्थ्याद्गुणो नेति बोध्यम् । दुधुक्षतीत्यादौ सनः सानुबन्धकत्वान्न दोषः । एतल्लोपविषये तृणसतादृक्षादेरन-

भिधानमिति कश्चित्। सिचा नित्यमिति आदेशान्तराऽभावे तस्याऽवश्यम्भावादित्यर्थः। सिजेव भवतीति निर्दिश्यमान-परिभाषया लेरेव सः। धातोरिति च विहितविशेषणमिति निर्दिश्यमानस्य व्यवहितत्वमिति भावः॥ ४५॥

---

## श्लिष आलिङ्गने। (३।१।४६)

विधित्वसम्भवे नियमार्थत्वं कथमित्यत आह इतर इति। प्रत्यासत्तिः संवन्धमात्रम्। प्राणिकर्तृकतद्विशेषश्चाऽऽलिङ्गन-मिति बोध्यम्। श्लिषेर्ना प्राप्ते इति परस्मैपदविषये विधित्वं स्यादित्यर्थः। भाष्ये आलिङ्गनेऽनालिङ्गने चेति कर्मणि कर्म-व्यतिहारे चाऽऽताम्प्रभृतिष्वित्यर्थः। तत्राऽऽलिङ्गने इष्टमेव। अन्यत्रापत्तिरेव दोषः। दोषान्तरेति बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भावः। नियमार्थमिति अचिकारविषये श्लिष आलिङ्गन एवेत्यर्थः। 'अचिण् विषय' शब्देन भावकर्मार्थकतशब्दभिन्नमात्मनेपदमुच्यते, अन्यथा विध्यर्थमिति अचिण् विषय इत्यनेन तद्भिन्नतिङामेव ग्रहणं स्यादित्यर्थः। तत्तु चिण् विषये विधिव्यावृत्त्यर्थं स्यादिति भावः। दाहार्थस्येति अन्यथा तत्र चारितार्थ्यादङो वाधो न स्यादिति भावः। सानुवन्धकत्वाद्वेति :श्लिषु दाह इति पाठात्। अनु-मित इति न च सोऽचरितार्थः। तत्रादिपदस्यैतत्सामर्थ्येनेतर-पुषादिमात्रपरत्वमित्यभिमानः। पुषादिपाठोऽपि श्यनर्थः। न चाऽन्यत्रैव पाठ्यः अशोकवनिकान्यायात्। वस्तुतः पुषादि-पाठसामर्थ्यात् आदिपदेन तत्र ग्रहणसामर्थ्याच्चाऽङ्क्सयोः परस्मैपद आलिङ्गनाऽनालिङ्गनविषये सर्वत्र विकल्पे प्राप्ते आत्मनेपदे चाऽऽलिङ्गनालिङ्गनयोरविशेषण क्से प्राप्ते द्वितीयेन

नियम आलिङ्गन एवेति। एवञ्चाऽर्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते। तस्यैव बाधस्यानुवादो भाष्ये तद्बाधनार्थमिति। न चाऽऽलिङ्गने क्स एवेति विपरीतनियमापत्तिः लक्ष्यानुरोधात् प्रत्ययनियमस्यैवाङ्गीकारादित्यूह्यम्। योगविभागसामर्थ्याच्च नियमेन सर्वं 'क्स' प्राप्तिबाधः ॥ ४६ ॥

---

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ( ३।१।४८ )

ननु णिङभावपक्षेऽपि सन्वत्त्वं दुर्वारं तत्र णावित्यनुक्तेरत आह सन्वल्लघुनीति। अन्ये त्वाऽऽहुरिति। अत्राऽरुचिस्तु भाष्याऽननुगुणत्वम्। वार्तिकोत्तरं पाठेन तत्स्तुत्यर्थत्वस्य स्वरसतः प्रतीतेः पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्ताऽधिकसुखप्राप्तिः। कर्मेलुङि कीदृशं रूपमिति प्रश्ने स्वरसतः कर्मप्रकृतिके लुङीत्यर्थके तस्य साधुत्वेऽपि असमञ्जसोत्तरत्वात् न्यूनसुखप्राप्तिः। एवञ्च सामान्यशास्त्राऽनुगतलक्ष्यप्रयोगाऽपेक्षया विशेषलक्षणानुगतशब्दप्रयोगे धर्माधिक्यमित्यस्य भाष्यस्य तात्पर्यम्। कर्मकर्त्तरीति कर्मवद्भावाच्चिणा बाधः स्यादित्यभिमानः। भाष्ये कर्मणि विधीयते य इति कर्मवद्भावप्राप्त इति भावः। उत्पुच्छयते गामिति कर्तुरीप्सिततममिति कर्मत्वं बोध्यम् ।४८॥

---

## अस्यतिवक्तिख्यातिभ्योऽङ् ( ३।१।५२ )

ननु परस्मैपदेष्वङ्दर्शनादात्मनेपदार्थमित्ययुक्तमत आह पुषादय आगणान्तादिति। आतिदेशिकस्येति यकश्चिणा नाबाधात् द्विवचने चिणोऽप्राप्तेः। आत्मनेपदमपि 'उपसर्गादस्यत्यूह्योः' इति वार्त्तिकेन सिद्धमित्यर्थः ॥ ५२ ॥

---

जूस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (३।१।५८)

ग्लुचेः स्तेयकरणार्थत्वात्कथं सिद्धिरत आह अनेकार्थत्वादिति ॥ ५८ ॥

---

## सार्वधातुके यक् ( ३।१।६७ )

इशेः कर्मणि नियताकांक्षत्वाद्दर्शयति वक्ष्यमाणस्येति । वाक्यार्थः क्रिया। सा चेह केनैतदेवम्भवतीत्येतद्रूपा। 'सरणम् धावनन्। अध्याहृतधावनादिति पदोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम्। ननु भावस्य क्रियारूपस्य संख्ययाऽयोगान्न द्विवचनादिकं भविष्यति। कर्मणि तु शक्तिशक्तिमतोरभेदोपचाराच्छक्तिमतश्च संख्यायोगाद्द्विवचनादिकं सेत्स्यतीत्यत आह इहेति । श्रुतेरिति साधनादिभेदाद्भिन्नत्वेऽपि श्रुतेराख्यात शब्दात् प्रविभागकल्पना भेदावगमरूपाऽशक्येत्यर्थः । कथं तर्हि द्विवचनादिकं तत्राह तत्रेति। साधनभेदादिति साधनभेदकृतभेदारोपादित्यर्थः। अथैकेति शब्दशक्तिस्वभावादिति भावः। तदा पाकाविति क्रियारूपस्य स्वतः संख्यासंवन्धाऽभावादिति तात्पर्यम्। ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्याया असत्वभूतत्वात्संख्यायोगाऽभावेनाऽनेकमित्यनुपपन्नमत आह कर्मशक्तीति। शब्देनेति न हि घटस्य शुक्ल इतिवद्घटस्य कर्मेति प्रयोगोऽस्तीति भावः। तदेवाह सामानाधिकरण्यमिति । कर्मादिपदैः शक्तिमदभेदमापन्नैव शक्तिरुच्यते। अत एव कर्मत्वमिति भावप्रत्ययेन शक्तिरुच्यते प्रवृत्तिनिमित्तेन व्यक्तेस्तादात्म्यसंवन्धस्याऽङ्गीकारादिति तत्वम्। एवञ्च कर्मणि विधीयमानाऽऽख्यातेनाऽपि तथैव शक्तिरुच्यते इति सामानाधिकरण्यस्योपपत्तिरिति भावः। ननु भावस्यैक-

त्वयोगे द्वित्वादियोगोऽपि स्यादत आह भेदाभावेति। परे तु अस्त्येवैकत्वसंख्या क्रियायाम्। असत्वन्त्वनारोपितद्र्व्यादिसंबन्धाऽभावमात्रेण। तदेवैक एवेत्येवकारेण भाष्ये ध्वनितमित्याहुः। आधारद्रव्याणाम्भेदेऽपि कुतः पाकादेर्भेदोऽत आह गुडतिलेति। आश्रितः पाकोऽपीत्यन्वयः आश्रयभेदात्तत्रापि भेदाऽध्यवसाय इति भावः। नन्वेवं तिङ्यपि द्विवचनादि स्यान्न स्याद्वा कृत्यपीत्यत आह घञादिभिरिति। तिङ्वाच्यस्तु न सत्त्वभूत इति भावः। उक्तार्थाऽज्ञानवतश्चोद्यमित्याह आख्यातेति। वस्तुतः पूर्वभाष्येण कृत्यपि तदनुपस्थाप्यसाधनगताया अपि संख्याया आरोपेण द्विवचनादीत्युक्तम्। तत्र शंकाऽसमञ्जस्यैव ❀। घञो दुर्लभत्वादिति यो गुडस्येत्यादिवक्ष्यमाणभाष्यविरोधादित्यपि बोध्यम्। एतेनाऽथ वेत्यपि न समञ्जसम्। एवञ्चाऽऽश्रयप्रकारादिकृतभेदानां पाकशब्दादवगतिसम्भवेन युक्तं वचनं न तु तिङन्ते तत्कृतभेदाऽनवगमके इति भावः। यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये तिङभिहिते चापीति। ननु 'उष्ट्रासिका' इत्यादावाख्यातवाच्ये भावे कथं भेदावऽगमोऽत आह अत्राऽऽश्रयाणामिति। तत्साम्याच्चेति न ह्येकासने तावत्साम्यसम्भवः, तत्प्रतिपादने फलञ्चेत्यर्थः। तत्सामानाधिकरण्याच्चेति पाठेऽपि अयमेवार्थः। उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः। ननु साम्यवाचके बाह्यभावात्कथं तत्प्रतीतिरत आह इवेति। परत्र परशब्दः प्रयुक्त इति न्यायादिति भावः। प्रयोजनाऽभावादिति प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः। यथेति पलाशरूपाश्रयाऽनेकत्वेऽपि

❀ असमञ्जसैव (ख) पुस्तके पाठः।

'राग' इत्येकवचनमेवेति भावः। वस्तुतस्त्वैकजातीयरागप्रतिपादनायैकवचनमिति बोध्यम्। किञ्च आश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिकत्वादपि न सा भावाऽऽख्याते द्विवचनादिनियामिकेत्याह न चेति। एवञ्च आसिकादि क्रियाविशेषणम्प्रथमान्तम्। क्तिनधिकारस्थण्वुलः स्त्रीत्वस्य सत्त्वेन 'सामान्ये नपुंसकम्' इत्यस्याऽप्रवृत्त्या न क्लीबत्वम्। उपमानोष्ट्राऽऽसनाऽभिन्नान्यासनानीति बोधः। बहुत्वाऽवधारणाच्च नैकवचनमिति बोध्यम्। कर्मणीति अत्र पक्षे आख्याताऽवयवाऽऽसादेः परिच्छेदकत्वादिरूपके आसनादौ वृत्तिः। परिच्छेदकत्वरूपफलाश्रयत्वात्कर्मत्वम्। दृष्टान्तव्याप्त्याश्रयत्वादिव परिच्छेदकत्वञ्च सादृश्येन। नाऽयं भाष्यार्थ इत्याह एवन्त्विति। विवक्षान्तरे आसेः परिच्छेदकत्वार्थरूपविवक्षाविशेषे। भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तन्नोपपादितं स्यादिति शेषः। एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादि द्विवचनादि। एवमासनप्रकारानभिसमीक्ष्याऽऽस्यन्त इत्यादि भावे बहुवचनमिति भाष्यार्थः। आख्यातवाच्येऽसत्त्वं लिङ्गकारकाऽनन्वयित्वमेव बोध्यम्। भिन्नकालत्वादिति भिन्नकालार्थवाचकत्वादित्यर्थः। ननु एकशेषमात्रेणाऽविद्यमानाऽनेकार्थाऽभिधानशक्तिः कथमत आह अन्तरेण चेति। तिङभिहिते चापीत्यादि भाष्ये तिङन्तार्थे भावे तथात्वेऽपि कालभेदेन भेदेऽपि असारूप्यादेकशेषाऽभावेन न बहुवचनादीत्यर्थः। तदेवोपपादयति न ह्येकमिति। इतः परं भिन्नपदवाच्यसाधनादिकृतभेदेन भेदावगमः कृदन्तेऽस्ति, न तिङन्ते इत्यत्र बीजभूतं तयोर्वैषम्यमाह अस्ति खल्वपीति भाष्ये। ननु लिङ्गसंख्याद्यन्वयित्वमेव द्रव्यत्वमिति वतिरनुपपन्नोऽत आह तत्रेति। भाष्ये क्रियया समवायमिति क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरण-

शक्तिभिः संबन्धं गच्छतीत्यर्थः। द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमिति अस्य कारकशक्तिमत्त्वमित्यर्थः। करणादिरूपेणेति कृदन्ते पाकेन वैरं कृतमित्यादौ तथान्वयादिति भावः। ननु साध्यत्वादिति असिद्धस्य जनकत्वाऽसम्भवादिति भावः। सिद्धा त्विति यन्निरूपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्यन्वयः। एवञ्चाऽन्यनिरूपितसिद्धत्वेऽप्यन्यनिरूपितं साध्यत्वं सम्भवत्येवेति भावः। तथा विषयेति तथा सति विषयभेदेनेत्यर्थः। क्रियाफलत्वादिति अर्श आद्यचा तद्वत्त्वादित्यर्थः। तस्य आख्यातवाच्यभावस्याऽन्वयस्त्वीदृशे विषयेऽन्यतराऽऽकांक्षयैव, 'ज्योतिष्टोमेन यजेत' इत्यादौ करणत्वेनाऽन्वयसत्वेऽपि स्वघटितपदावाच्यक्रियायां तत्त्वाऽभाव एवेति बोध्यम्। गुणाभावमिति इदं चिन्त्यं कर्मणः क्रियाफलाश्रयत्वादिव कर्तुः क्रियाश्रयत्वादिवचनप्राधान्यवत् करणस्यापि स्वव्यापाराऽव्यवधानेन फलोत्पादकतयाऽन्यकारकापेक्षया प्राधान्यमस्त्येव। न हि कर्तृकर्मणोः प्राधान्यमेवाश्रयणीयं नेतरस्येदृशमित्यत्र मानमिति। तस्मात्स्वभावत एव तदन्वयाऽभाव इति बोध्यम्। एवञ्च करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम्। अस्यैवाऽर्थस्य साधकं वैषम्यान्तरं दर्शयति कालपुरुषेत्यादि। असत्वभूताया एवैतत्सम्भव इति भावः। प्रत्यक्त्वमुत्तमे पराक्त्वं मध्यमे, प्रत्यक्त्वं स्वगतत्वं पराक्त्वं संबोध्यगतत्वम्। युष्मदस्मद्व्यतिरेकेणापि मध्यमोत्तमाभ्यां तद्बोधः। स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भावः। भाष्ये कर्त्रा सम्प्रयुज्यत इति तिङन्तवाच्यो भावो नियमेन कर्त्राकांक्षः कृदुपात्तस्तु न तथा न हि 'पाको' 'राग' इत्युक्ते कस्येति नियमेन कर्त्राकांक्षा दृश्यते। नाऽपि तस्य नियमेन प्रयोगो दृश्यते। इदमेव ध्वन-

यितुं 'सम्' 'प्र' इत्युपसर्गद्वयोपादानमित्यर्थो मम भाति। यतश्च क्रियात्वं सामान्यमुभयत्राऽपि, साध्यत्वसिद्धत्वकृतश्च पूर्वोक्तो विशेषो दृश्यते तथाऽयमपि। यत्तिङर्थस्य भावस्य लिङ्ग वाच्यसाधनकृतसंख्याद्ययोग्यता कृदर्थस्य तु तद्योग्यतेति भाष्यार्थः। ब्राह्मणानामिति कर्तरि षष्ठी। एकपदेति इयं व्याख्या भाष्याऽननुगुणा 'पाचक' इति कृदन्ते तस्यापि सत्त्वात्। न च तत्र न कृदभिहितो भावः पचतीत्यत्रापि न तिङभिहितो भाव इति तुल्यम्। उपलक्षणभावेनेति विशेषणत्वेनेत्यर्थः। अत्रापि पक्षे भाष्यस्वरसश्चिन्त्य एव पाकादिशब्दोपक्रमेणैव भाष्यस्य प्रवृत्तेः। भाष्ये सार्वधातुकार्था इत्यत्र सार्वधातुकपदं तिङुपलक्षकम्। नानापक्षोत्थितौ वीजमाह इहेति। शास्त्रीयाऽर्थवत्ता पदाऽवयवानामावापोद्धारिकी अन्वयव्यतिरेकाश्रयेत्यन्वयः। आवापः—प्रक्षेपः * उद्धारः अपनयस्तत्कृता। अत एव भाष्यकारः शास्त्रमेव पक्षद्वयसाधकत्वेनोपन्यसिष्यति। सार्वधातुकमिति इदञ्च तिङ्परम्। अत एवाऽग्रे 'गच्छ' इत्युदाहरणं संगच्छते। एकद्वीति द्व्येकयोरित्यादिसूत्रेष्वित्यर्थः। ननु 'अतदर्थत्वाद्' इत्यस्य तदर्थत्वाऽभावादित्यर्थो न युक्त एकत्वाद्यर्थत्वस्य सत्त्वादित्यत आह सामर्थ्यादिति। न तान्येवेति न तानि एवाऽर्थो यस्येति विग्रह इत्यर्थः। तत्पदार्थमाह एकत्वादीनीति तन्मात्रार्थत्वाऽभावादित्यर्थ इति तात्पर्यम्।

ननु विकरणानां तदर्थत्वे 'कृताऽभिहित' इत्यनुपपन्नमत आह क्वचिदेवेति। एवञ्च सर्वत्र विकरणाऽभावात् 'कृतां तेषु शक्तिकल्पनाऽऽवश्यकीति भावः। विकरणार्थत्वपक्षे शंकते भाष्ये किमुच्यते कृतेत्यादिना। इतर आह न शंक्यमिति। तत्र तदुक्तदूषणे 'कृता' इत्ययुक्तम्। अभिहिते इत्येव युक्त-

* अपनय उद्धार इति पाठो वर्तते।

पित्याह पक्षान्तरमिति । यदि चेति यदि 'लेन' अभिधानं स्यान्नेदम्पक्षान्तरं स्यादित्यर्थः । कथमिति पक्षान्तरत्वाऽसम्भवेऽपि 'लेन' अभिधानमाश्रयितुं कथमशक्यमित्यर्थः । तदाश्रयणस्य शक्यत्वमुपपादयति यदा भवानेवेति । तद्व्याचष्टे ततो ल इति । अत एव लिडादिषु कर्त्राद्यर्थावगतिरिति बोध्यम् । इतरोऽशक्यत्वमुपपादयति एवं वक्ष्यामीत्यादिना । 'लः कर्मणि' इति न्यासे गौरवं सूत्रभेदश्च स्यादत आह व्याख्यास्यामीति ।

उक्तेऽर्थे भाष्यं योजयति । तत्र कर्मेति । कृते लकारे इति वर्तमाने लडित्यादिभिः परत्वादिति भावः । यथान्यासेऽपि वर्तमाने लडित्यादिभिः सिद्धलकारानुवादेन कर्त्राद्यर्थसंबन्धेन साधुत्वविधायकमेवेदम् । 'लस्य' साधुत्वञ्चाऽऽदेशद्वारा बोध्यम् । ननु लुकि तदभावात्कोऽभिदध्यादत आह लोपद्वारेणेति । कर्त्रभीति पाठः । कर्त्राद्यभीति पाठे आदिशब्दार्थश्चिन्त्यः । लादेशस्येति लस्य क्वापि प्रयोगाऽभावादेवमुक्तम् । विधानेति लिङ्लिटोर्विधानसामर्थ्यादित्यर्थः । भाष्ये तस्मान्नैवमिति 'लःकर्मणि' इत्येतदित्यर्थः । तस्मान्नैतदिति पाठान्तरम् । ततः किम् । तत्राह शक्यं नेति । यदुक्तं न लेनाप्यभिधानं भवतीति तद्वक्तुं शक्यमित्यर्थः । भवति चेदिति लेनाऽभिधानं भवति चेद्विकरणार्थत्वपक्षेऽभिहिते विकरणानामनापत्तौ तच्छास्त्रवैयर्थ्यं स्यादित्यर्थः । तदाह ततश्चेति । भाष्ये एवन्तर्हीत्यादिनोक्तं विकरणार्थत्वं दूषयति इदमस्येति । इदम्प्रकृतीत्यादि अस्य आचार्यस्य स्वाभाविकं लोकव्युत्पत्तिसिद्धं वाचनिकं व्याकरणान्तर इव । प्रत्ययार्थं सहेति प्रतीयमानार्थं सह ब्रूतः, एकोपस्थितिविषयीकुरुतः लोके तथैव व्युत्पत्तेरिति भावः । नानार्थयोः भिन्नार्थयोः । सहायीभावः सहायत्वम् । अयम्भावः । पचतीत्यादौ प्रत्ययार्थः प्रधानमित्युत्सर्गरीत्या द्वयोरपि प्रत्य-

यार्थयोः प्राधान्ये एकत्र विशेषणतयाऽन्वितप्रकृतेरपरत्रतयासंबन्धो व्युत्पत्तिविरुद्धः तदर्थाऽनालिङ्गितप्रत्ययार्थमानमप्युक्त व्युत्पत्तिविरुद्धमित्ययं पक्षोऽऽसंगत इति भावः। विशिष्टार्थ प्रतिपादने सहायकाऽभावादिति प्रकृतेरिति शेषः। परस्परेति प्रकृतिप्रत्यययोरित्यर्थः। 'पचति' इति आख्याते कारकविशिष्टक्रियाप्राधान्यादिदं चिन्त्यम्। भाष्यन्तु 'पचन् पच्यमान' इत्याद्यभिप्रायकतया नेयम्। कैयटे पचतीत्याद्यपि पचन्नित्यादेरुपलक्षणम्। वा सहायीभाव इत्यत्र च्विस्तु उभयत्र तस्या असहायत्वादुपपन्नः। केचित्तु 'क्रिययाविशिष्ट' इत्यस्य क्रियासहित इत्यर्थः। कर्तृविशेषणिका कर्मविशेषणिका चेति यावत्। एकेन चोभयविशेषणिका क्रिया न प्रतिपादयितुं शक्येति भाष्यार्थमाहुः। तच्चिन्त्यम्। न त्वेकेनेति धातुनेत्यर्थः। अत्र केचित् सुपामिव तिङामपि कर्त्रादिद्योतकत्वमेव भाष्यमत्रापि सुयोजमेवेत्याहुः। निरूपितञ्चैतद्विस्तरेण मञ्जूषायामाख्यातवादे। भाष्ये प्रसिद्धो नियमस्तत्रेति तत्र अर्थ विषये। यतः सुपां तिङाञ्चाऽर्थद्वयं दृश्यतेऽतः प्रत्ययनियमाऽसम्भवादिति भावः। नियम इत्यर्थ इति प्रत्ययनियम इत्यर्थः। ननु कर्मवद्भावादेव यक् सिद्धयोऽत आह कर्मवदिति। स्वाश्रयस्य कार्यस्येति परत्वेन वलवत इत्यर्थः। अतिदेशस्त्वात्मनेपपादिविधानेन चरितार्थ इति भावः। वलीयस्त्वमिति कर्मवदिति सूत्रस्य परत्वादिति शेषः। वस्तुतः कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति प्रत्ययलक्षणसूत्रोक्तरीत्या भाष्यं समञ्जसमेव। भाष्ये एवमप्युपसंख्यानं कर्त्तव्यमिति कर्मकर्त्तर्युपसंख्यानमित्यर्थः। भाष्ये परत्वात् श्यन्निति श्यन्यकोः स्वरे विशेषः। सर्वा प्राप्तिरिति वाध्यसामान्यचिन्तयेति भावः। भाष्ये अप्रतिषिद्धेति अवाधितेत्यर्थः। नोत्स-

इते प्रतिषिद्धेति अनन्तरस्येति न्यायेन तद्विषयाधीना कृता-सती तां बाधितुं नोत्सहत इत्यर्थः । तद्व्युत्पादयति न्याय्येति परविप्रतिषेधेत्यर्थः । पूर्वविप्रतिषेधकल्पने न मानमिति भावः । ननु कर्त्तर्यपि यक्प्राप्तेः कथं सिद्धमत आह सार्वधात्विति । भाष्ये कर्मकर्त्तर्यपीति पच्यते स्वयमेवेत्यादौ शबादीन् बाधित्वेति भावः । भाष्ये पूर्वविप्रतिषेधं मा वोचमिति अनेन पूर्वविप्रति-षेधोऽपूर्ववचनसाध्य इति सूचयति । भाष्ये कर्मवद्भाववचनसाम-र्थ्यादिति तत्सामर्थ्याद्नन्तरस्येति न्यायो नाऽऽश्रीयते । किन्तु बाध्यसामान्यचिन्तै वेति भावः ॥ ६७ ॥

---

## यसोऽनुपसर्गात् ( ३।१।७१ )

इदं विकल्पेन श्यन्विधायकम् । संपूर्वादेव यस इति सोपसर्गविषयो नियम इति भावः । एतेन एवं नियमे केवलान्न स्यादित्यपास्तम् । तदाह नाऽन्यपूर्वादिति ॥ ७१ ॥

---

## रुधादिभ्यः श्नम् ( ३।१।७८ )

भाष्ये आर्धधातुकस्याङ्गस्येति अङ्गसंज्ञानिमित्तस्याऽऽर्धधातु-कस्येत्यर्थः । पृमृणोः क्र्यादित्वात्तयोः श्नम् दुर्लभोऽत आह व्यत्ययेनेति । इति क्र्यादिरिति क्रैयादिक इति वा पाठः । ननु श्नान्नलोपे उपधात्वं सुलभमत आह असिद्धत्वादिति । भाष्ये पित्त्वं वक्तव्यमिति एवञ्च तेनाऽनुदात्तत्वं सिद्धमित्यर्थः । अनित्यत्वाश्रयणेनेति ननु तत्सूत्रविषये तत्परिभाषायाः 'कष्टाय' इत्यादिनिर्देशैरनित्यत्वाऽऽवश्यकत्वेन नाम्विषयेपि तत्त्वमाश्रित्य शाः प्रत्याख्येय इति चेन्न नलोपविधायके अङ्गाऽवयवश्नमः

परस्य नस्य लोप' इत्यर्थेऽनैमित्तिकतयाऽन्तरङ्गत्वेन 'सुपि च' इत्यस्य परनिमित्तकतया बहिरङ्गत्वेन तस्याऽसिद्धतया न लोपप्राप्तिरित्याशयात्। भाष्ये परत्वादिति अन्तरङ्गत्वस्याऽप्युपलक्षणम्। किञ्च 'सुपि च' इत्यतो नामीति नित्यं विशेषाऽभावेऽपि शास्त्रप्राप्तेः सत्त्वात्। ध्वनितञ्चेदम् 'आयादय' इति सूत्रे 'इको झल्' इत्यत्र च भाष्ये इति वदन्ति ॥ ७८ ॥

---

## तनादिकृञ्भ्य उः ( ३।१।७९ )

भाष्ये अनेन माभूदिति अन्यथा तस्याऽसिद्धत्वादनेनैव स्यादिति भावः। ननु येननेति न च 'ह्रस्वादङ्गाद्' इत्यस्याऽसिद्धत्वात्कथं तेन येननाप्राप्तिन्यायः, तनादिपाठस्तु विकरणार्थः स्यात्, विकल्पोऽपि तनादौ चरितार्थ इति वाच्यम् असिद्धत्वेऽपि यदीदं न स्यात्तदा स्यादेव 'ह्रस्वादङ्गाद्' इत्यस्य प्राप्तिरित्याशयात्। यदुत्सर्गप्रवृत्तौ विकल्पवैयर्थ्यं स उत्सर्गोऽपवादाऽभावपक्षेऽपि न प्रवर्त्ततेऽन्यस्तु प्रवर्त्तत एवेत्युक्ताशयः। भाष्ये सोऽपि प्रोक्त इति लुक् चिण्वद्भावश्चेत्यर्थः। एवञ्च सूत्रे कृञ्ग्रहणम्प्रत्याख्यातम्। एतेन कृञ्ग्रहणं गणकार्याऽनित्यत्वज्ञापनार्थम्, तेन 'न विश्वसेद' इत्यादिसिद्धिरित्यपास्तत्। 'न विश्वसेद्' इत्याद्यसाध्वेव ॥ ७९ ॥

---

## धिन्विकृण्व्योर च ( ३।१।८० )

भाष्ये ननु च लोपे सति न धात्विति समुच्चयविषये एकसमभिव्याहृतस्याऽपरसमभिव्याहृतार्थाऽधीनत्वप्रतीतेरनुभवसिद्धतया 'द्विर्वचनेऽचि' इति च तद्भावभाविताभात्रेणाऽऽर्धधातुकनि-

मित्तो लोपः । तद्भावभाविता च समकालोत्पत्तावपि अन्वय-व्यतिरेकगम्या सन्नियोगशिष्टानां सह प्रवृत्तेश्चेति भावः । सन्नियोगेति ननु तादृशविषये परनिमित्तत्वाऽभावेऽपि केवल-निमित्तत्वाऽभावे मानाऽभावः । जीरदानो * रुदाहरणत्वमिति वदतो वाक्यकारस्य तद्भावभाविताजमात्रेणैव निमित्तत्वनिवेश-स्येष्टत्वाच्चेति चेन्न पूर्वकालवर्त्तिबुद्ध्या विषयीकृतस्यैव निमि-त्तत्वमित्याशयात् । भाष्ये अपि च प्रत्याख्यायत इति अनेन सूत्रमताऽपेक्षया प्रत्याख्यानवादिमतम्प्रबलमिति ध्वनि-तम् । एतन्मूलकमेव पठ्यते यथोत्तरं मुनीनाम्प्रामाण्य-मिति ॥ ८० ॥

---

## हलः श्नः शानज्झौ ( ३।१।८३ )

भाष्ये ज्ञापनार्थं इति ज्ञापनरूपोऽर्थः प्रयोजनमित्यर्थः । हेः पित्त्वं नेति अपिद्ग्रहणं न कार्यमित्यर्थः । शंकते पितोऽय-मिति उत्तरयति सार्वधातुकादेश इति । तबादिषु च ङित्त्वं न प्रतिषेध्यमिति भाष्ये ङित्त्वप्रतिषेधाय पित्त्वं न कार्यमिति भावः । तबादिष्विति निर्धारणे सप्तमी । न च स्थानिव-त्त्वप्रयुक्तङित्त्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात् 'सार्व-धातुकमपित्' इति ङित्त्वप्रतिषेधाय पित्त्वमावश्यक मिति वाच्यम् एतदाशयेनैव क्रियन्ते न्यास एव इति वक्ष्यत इत्यदोषात् । हेरपि-त्त्वमनुदात्तसेः स्थाने आन्तरतम्यात्प्राप्तस्यानुदात्तादेर्वारणार्थमा-वश्यकमिति तातङोऽपि ङित्त्वमन्त्यादेशार्थमावश्यकमिति च तद्भावः । अवश्यमत्रेति 'उकार' इत्संज्ञकत्वेऽपि सामान्यग्रह-णार्थौ वा तदनुबन्धकपरिभाषाप्रवृत्त्यर्थौ वेति सन्देहः स्यादिति

---

* जीरदानुः जीवनीयौषधिः । जीवनीयाश्च दश जीवकादयः ।

तस्मान्नार्थोऽनेनेति । न च वक्ष्यमाणेति ङीबापत्तिर्लृडादेशत्वेन टित्वादिति वाच्यम् सत्यभिधाने तत्राऽजादिपाठाट्टाप्सिद्धेः । एतेन इदं शित्त्वं क्वचित्स्थानिवत्त्वेनाऽनुबन्धकार्याऽभावस्य ज्ञापकमित्यपास्तम् । भाष्ये एवमपीति अस्य केन तन्न स्यादित्यनेनान्वयः । पिति ङित्कृतमिति 'अवेट्' इत्यादौ लङस्तिपः पित्त्वादनुदात्तत्वमस्तु स्थानिवद्भावेन ङित्त्वाद्गुणनिषेधश्च प्राप्नोतीत्यर्थः आदेशविधौ विशिष्टस्याऽननुवादान्ङित्त्वाद्यतिदेशोऽनल्विधाविति निषेधाप्रवृत्तेः । ङिति पित्कृतमित्यस्योदाहरणमाह ब्रूतादिति । अत्राऽनुदात्तेत्त्वं 'ब्रुव ईट्' इतीडागमश्चापाद्यौ ॥ ८३ ॥

---

## छन्दसि शायजपि ( ३।१।८४ )

अडागम इति लुङ् लङ् लृङ्क्ष्विति ॥ ८४ ॥

---

## व्यत्ययो बहुलम् ( ३।१।८५ )

भाष्ये स्यादीनामिति स्यतासिप्रभृतीनामित्यर्थः । मधुन इति प्राप्ते इति अमृतत्तीयऽन्यतरवाचिनित्यनपुंसकाभिप्रायमिदम् । उपग्रहः लादेशव्यङ्ग्यं स्वार्थत्वादि । इह तत्प्रतीतिनिमित्ते परस्मैपदात्मनेपदे उपग्रहशब्देन लक्षणयोच्येते ॥८५॥

---

## लिङ्याशिष्यङ् ( ३।१।८६ )

गास्थोरङभावे 'अतो येय' इति न स्यात् । अङि गुण इति, ऋदृशोऽङि' इत्यनेनेति भावः । भाष्ये आडपीति भस्येति शेषः । आकारलोप इति अडमाश्रित्य 'आतो लोप इटि च' इत्यालोपः । भाष्ये आर्धधातुकत्वादेत्त्वमिति 'वाऽन्यस्यसंयोगादेः'

# संस्कृतगवेषणा ।

—:०:४:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सविधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अवका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंवन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तस्तर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

वालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

# उद्योतनियमः ।

—:*:०:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निः-सरिष्यति । भविष्यति मुद्राषट्कं वार्षिकं मूल्य-मस्य मुद्रणकर्मणि परिसमाप्ते । ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्ध-चतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति । अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति ।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस ।)

श्रीमते वायुपुत्राय नमः ।

# भाष्यप्रदीपोद्योतः ।

महामहोपाध्यायनागेशभट्टविरचितः

—— :*:०:*: ——



द्विवेदोपाह्वेन

बालगोविन्दशास्त्रिणा वैद्येन

संशोधितः

प्रकाशितश्च ।

—:०:*:०:—

गोपालचन्द्र चक्रवर्ती द्वारा भारतधर्म प्रेस, काशीमें मुद्रित ।

# अभ्यर्थना ।

—**०**—

महोदयाः

अस्ति खलु विदितमेतद्यदधुना वाराणसेयानां विदुषां वैदुष्यम्प्रायः पाणिनिव्याकरणमधिष्ठायैव परिष्कारबलेन सर्वोपरि वरीवर्त्ति । व्याकरणञ्च तन्महर्षिभगवत्पतञ्जलिप्रणीतमहाभाष्यमन्तरेणाऽकिञ्चित्करम् । तच्च महाभाष्यमत्यर्थं गूढ़ाऽभिप्रायमित्यालोच्य कैयटेन तदर्थबोधनाय प्रदीपो व्यधायि । ततः कालक्रमात् जनानां बुद्धिवैपुल्याऽभावात् परमकारुणिकेन महामहोपाध्यायनागेशभट्टेनोभयार्थद्योतकोद्योतो व्यधायि । किन्तु, अयमुद्योतोऽद्यावधि आपादचूड़ं न क्वापि मुद्रित इति महान् खेदः । केवलमादितोऽध्यायद्वयमुद्योतस्य 'बम्बई' नगरे मुद्रितम् । तृतीयाऽध्यायादारभ्याऽऽसमाप्ति मुद्रयितुमहं बद्धपरिकरः केवलं धाष्टर्यादेव सञ्जातोऽस्मि । तत्रभवतो नागेशभट्टविदुषः पुण्यप्रभाव एव मां तारयिष्यतीति मदीयो दृढ़विश्वासः ।

आदर्शपुस्तकञ्चैकमेव 'कथिदाय' विक्रमवत्सरलिखितमस्ति । एकमपरम्पुस्तकमद्याभ्यर्थनालेखकाले 'टीकमणि कालेज' संस्कृतपाठशालाया व्याकरणप्रधानाध्यापकेन श्रीमद्विद्वद्वरपूर्णचन्द्राचारिणा श्रीविद्वद्वरानन्तरामशास्त्रिणः सकाशादवाप्य प्रदत्तमिति, उभयोरपि विदुषोराजन्माहं ऋणी भविष्यामि । प्राप्तस्यास्य 'ख' संज्ञा भविष्यति । उद्योतस्यास्य सभाष्यस्य 'क' संज्ञकं पुस्तकं श्रीमद्विद्वद्वररामचन्द्रशर्मणा मम पित्रा संगृहीतन्तत्तु मदीयमेव । एताभ्यां मुद्रितेऽस्मिन्नुद्योते यदि क्वापि स्खलनं स्यात्तर्हि विद्वद्भिः क्षन्तव्यमिति विदुषां वशंवदः ।

बालगोविन्द वैद्यः । मार्गशीर्ष १५ ।

इत्यनेनाऽङभावोऽपि छान्दसत्वादिति बोध्यम् । उभयलिङ्गत्वादिति 'छन्दस्युभयथा' इत्यनेनोभयसंज्ञकत्वादित्यर्थः ॥ ८६ ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे चतुर्थमाह्निकम् ॥ ४ ॥

---

## कर्मवत्कर्मणा तुल्यक्रियः । ( ३८।१७ )

'तेन तुल्यम्' इति वतिः उपमेये प्रथमादर्शनात् । कर्मणेति पारिभाषिकस्य कर्मणो ग्रहणं कृत्रिमत्वात् । सामर्थ्याच्च 'तुल्य क्रिया' इत्येतावतैव क्रियया तुल्यत्वस्य लाभात् । न ह्यक्रियया क्रिया तुल्या भवति । ननु वत्यर्थलाभे स्वाश्रयमपि भविष्यतीत्यत आह असतीति । तदभावे तल्लाभ एव न भवतीति भावः । संज्ञेति 'अधिशीङ्' इतिवदिति भावः । अकर्मकव्यपदेशाऽभावादिति एतच्छास्त्रीयकर्मसंज्ञकान्वयित्वमेव सकर्मकत्वमिति भावः । ननु भावे 'ले' कर्त्तरि वा 'ले' को विशेषोऽत आह लादेशेनेति । तृतीया भवतीति कर्त्तरि लादेशे तु सा दुर्लभेति भावः । न चाऽसत्यपीति लान्तवाच्यः कर्त्ता कर्मेत्यर्थं मत्वा शंका । ततश्च यावत्कर्त्तरि न लस्तावत्कर्मसंज्ञाऽभावादकर्मकत्वेन भावे लेऽपि सिध्यतीत्यर्थः । लान्तस्य कार्ये कर्त्तव्ये कर्त्ता कर्मेत्यर्थं मत्वोत्तरयति यस्मादिति । ततश्च भावे लेऽपि कर्त्तव्ये कर्त्तुः कर्मत्वं स्यात् । ततश्चाऽकर्मकत्वाऽभावात्तु भावे लो न स्यादिति भावः । 'लः कर्मणि' इति विधेर्यग्विध्युक्तरीत्या साधुत्वाऽऽख्यापकत्वाल्लान्तकार्यत्वं बोध्यम् । वस्तुतो लवाच्यस्यैव कर्त्तुः कर्मवत्त्वेन नेदं वतेः प्रयोजनम् । 'नमते दण्ड' इत्यादौ शप्सिद्धिस्तु मुख्यं प्रयोजनं वक्ष्यति धातुवाच्येति । प्रत्यासत्त्या धातुवाच्यक्रियापेक्षयैव तुल्यक्रियत्वस्य ग्रहणमिति

भावः। प्रत्यासत्तिमाश्रित्य शङ्कते नन्विति। कारकान्तराश्रयत्व मिति कारकान्तराश्रयत्वेनाश्रयणमित्यर्थः। व्याप्तिन्यायाश्रयेणोत्तरयति नैष दोष इति। स्वव्यापारमिति स्वव्यापारावेशं विना क्रियासाधकत्वाऽयोगादिति भावः। तत्राऽवश्यमिति एकाऽवस्थायां भेदनिवन्धनतुल्यत्वाऽसम्भवादिति भावः। करणाद्यवस्था अपीति व्याप्तिन्यायादिति भावः। प्रधानव्यापारः धात्वर्थ व्यापारः। कर्तृत्वमिति आश्रयतामात्रमित्यर्थः। तन्निरूपितकरणत्वाऽभावप्रतिपादनपरञ्चैतत्। प्रधानक्रियापेक्षो लब्धः करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया तत्तुल्यत्वग्रहणनिवारणायेत्यर्थः। यदि तु लक्ष्याऽनुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते, प्रत्यासत्तिस्तु यस्य धातोर्यत्कर्म तत्रत्यक्रियया तस्यैव धातोः कर्त्ता यदि तुल्यक्रिय इति वक्ष्यमाणार्थलाभार्थमावश्यकी तदा नेदम्प्रयोजनम्। अतो यत्र कर्मणि क्रियाकृतविशेषस्तदर्थमिति प्रयोजनान्तरं वक्ष्यति। ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात् कथं तुल्यत्वमत आह तुल्यक्रियत्वाच्चेति। अतिप्रसङ्ग इति प्रश्न इति इति व्युत्पादयितुं प्रश्न इत्यर्थः। साधारणेति यथा एतौ तुल्यधनावित्यत्रेत्यर्थः। कर्तृकर्मसाध्यत्वाच्चेति जन्यत्वेनोभयोः साधारणी क्रियेत्यर्थः। 'समान' शब्दे सदृशवाचकत्वस्याऽपि सत्त्वादाह साधारणेति। एतच्चेति किन्तर्हीत्यादि चेत्यर्थः। सादृश्यवचन 'तुल्य' शब्दस्य प्रसिद्धतरत्वाच्चेत्यपि वोध्यम्। इत्येवेति सहार्थयुक्त तृतीयया एकक्रियाजनकत्वरूपसाहित्यलाभेन त्वदुक्तार्थलाभादिति भावः। च्विप्रत्यये 'कर्तृ' शब्दे रीङ् स्यादत आह च्वेरिति। ननु च्वेरभावे अकर्त्तरि कर्त्तरि भूते इत्येवोचितम्प्रकृतिविकृतिभावप्रतीतय अत आह अथ वेति। भाष्ये यथा कर्मणीति पूर्वान्वयि। ननु विक्लित्तिद्विधाभवनरूपायाः क्रियाया

एकत्वात्कथम्भेदनिबन्धनसादृश्योपपत्तिरत आह कर्तृकर्मेति। तत्तत्संज्ञालाभरूपाऽवस्थाभेदादाश्रयस्य भेदाऽवसाये तन्मूलकः क्रियाया भेदाऽवसाय इति सादृश्योपपत्तिरिति भावः। लक्षणायां हेतुमाह साध्येति। साध्या क्रिया, साधनं कारकम्। व्यापारयोरिति व्यापारशब्देन धात्वर्थावुच्येते। तद्धात्वर्थरूपं सादृश्यं न विवक्षितम्। किन्तु सामर्थ्यादवान्तरसादृश्यमेव विवक्षितमिति तात्पर्यम्। भाष्ये कर्त्ता कर्मवदिति 'कर्तरि शब्' इत्यतोऽनुवृत्तस्य 'कर्त्तरि' इत्यस्य प्रथमया विपरिणाम इति भावः। पात्राणामपीति, एवञ्च भिदेः कर्मसु पात्रेषु या क्रिया सा तत्कर्तरि कुसूलेऽपीति भावः। समानशब्दः साधारणपर्याय एकस्मिन्नित्यर्थे पर्यवस्यतीत्याह एकस्मिन्निति। ननु युगपत्स्वातन्त्र्यपारतन्त्र्ययोर्विरुद्धत्वात्कथम्भाष्येऽनयोर्वाक्ययोर्युगपत्प्रयोगोऽत आह न चाऽस्येति। प्रतिपादनायेति तत्प्रयोगे या कर्मस्था साऽत्र प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः। लुनाताविति 'लुनाति केदारं देवदत्त' इति प्रयोग इत्यर्थः। लावयते केदार इति 'णिश्रंथि' इति यक्चिणोः प्रतिषेधः। कर्मवद्भावफलन्त्वात्मनेपदमेव। 'णिचश्च' इत्यनेन तु न सिद्धिः क्रियोद्देश्यफलस्य कर्तृगामित्वाऽभावात्। आहुरिति अत्राऽरुचिस्तु ण्यन्तस्य धात्वन्तरत्वम्। लावयताविति निवृत्तप्रेषण पक्ष इति भावः। अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह अपारिस्पन्दनेति। इदञ्च प्रकृताऽभिप्रायेण। 'भावे घञ्' इत्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम्। यत्र चेति यथा 'लू भिदृ' आदौ 'कर्मणि' क्रियाकृतविशेषदर्शनात्तस्था सा! 'पश्यति' इत्यादौ राजादिदर्शनकर्त्तर्येव हर्षादिलक्षणविशेषदर्शनात्तत्स्थैवेति भावः। न चैवं पच्यादिकर्त्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्, किञ्च पश्यत्यादीनां

कर्तृस्थभावकत्वाऽनुपपत्तिः कर्त्तरि क्रियाकृतविशेषाऽभावादिति वाच्यम् येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः। यथा 'पश्यति, गच्छति, इत्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्। संयोगश्चोभयनिष्ठः। एवं ह्रासोऽपि। यत्र तु कर्त्रवृत्तिधर्मरूपं 'स' कर्मस्थभावकादिः। यथा 'भिदादिः' इत्यत्र तात्पर्यात्। भाष्ये वक्ष्यत्येतत् सकर्मकाणामिति। अयं भावः। कालादिभिन्नकर्माऽभाववतामन्यत्राऽकर्मकग्रहणेन ग्रहणदर्शनादत्राऽपि तथात्वापत्तौ 'मासम्पचत्योदनः स्वयमेव' इत्यादौ कर्मवदकर्मकस्येति वचने कर्मवत्त्वं प्राप्नोतीति सकर्मकाणां प्रतिषेध इत्यावश्यकमिति। अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात्। नन्विति उदाहरणवलात्तादृशे विषय एव प्रतिषेध इति न भ्रमितव्यमिति भावः। अन्ये तु इदमुदाहरणश्चिन्त्यम्। आश्लेषः संयोगविशेषाऽनुकूलव्यापारः। तत्र सयोगाश्रयत्वेन तयोः कर्मत्वं व्यापाराश्रयत्वेन कर्तृत्वम्। तत्र सयोगाऽनुकूलक्रियायाः कर्तृत्वोपयोगित्वेऽपि व्यक्तिभेदोऽवश्यमङ्गीकार्यः। अन्यथोभयोरपि कर्तृत्वमेव स्यात्। इमावाश्लिष्यत इति यथा। भेदे तु अन्यनिष्ठाम्प्रति अन्यस्य कर्मत्वमुपपद्यते। एवञ्च कर्मत्वोपयोगिक्रियया तुल्यक्रियस्य तदीयकर्तुरभावात् कर्मवत्त्वाऽप्राप्तेरित्याहुः। तत्रेति अग्रे वक्ष्यते। ननु 'कर्मणः' 'कर्तुः' इति युगपद्व विरुद्धमत आह सत इति। कर्मणेति चोपादानादिति प्रत्यासत्त्येति भावः। समर्थपरिभाषयैवेदं सिद्धमत आह समर्थेति। एवञ्च दृष्टान्त एकदेशयुक्तिरिति ध्वनितम्। क्रियया कर्तुरूपमाऽसम्भवादाह कर्तृस्थामिति। भाष्ये न च कर्तृस्थेति। तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः। करणादितुल्यक्रियेऽतिव्याप्तिवारणस्य प्रत्यासत्त्यैव सिद्ध्या 'कर्मणा' इत्युपादानसामर्थ्यात्कर्ममात्रनिष्ठ-

फलरूपकर्मस्थक्रिया लक्ष्यत इति भावः। यथाश्रुतप्रागुक्तकैयट-रीत्या व्याख्याने तु जानात्यादिकर्तर्यपि क्रियाकृतविशेषाऽनुप-लम्भेन 'चिन्तयति' इत्याद्युपक्रमेणैतदुक्त्यसंगतिः। एतेन क्रियायाः क्रियाकृतविशेषाणामित्यर्थ इत्यपास्तम्। तदुक्तं हरिणा—'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता। क्रिया व्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता' इति। अन्येषा-मिति मत इति शेषः। इदमेव मतं युक्तमुक्तयुक्तेः। दोषा-न्तरेति तदुद्भावनपूर्वकं मुख्यफलप्रदर्शनायेत्यर्थः। प्रतिषेधेति। ननु 'दुहेति णिश्रीति' च शपाविति नमतिविषयकमिदं कर्त्तै-वेति 'शेषाद्' इति सूत्रे 'कर्त्तरि कर्मव्यतिहार' इत्यतः 'कर्त्तरि' इति पदानुवृत्त्याऽयमर्थो लब्ध इति भावः। योगविभागेनेति इदञ्च यग्विधायके निरूपितम्। कार्याऽतिदेशो वाऽयमिति एवञ्च परत्वादात्मनेपदविधिः शब्बाधश्च सिद्ध इत्यर्थः। नन्वेवं स्वाश्रयनिवृत्तिरेव पर्यवसन्नेत्यत आह यच्चेति। अतिदेशेन तदाश्रयकार्येण। एवञ्च 'नमते दण्डो,ऽचीकरत' इत्यादौ यक्-चिणोरभावे चङ्शपौ भवतोऽन्यत्र च न भवत इति भावः। भाष्ये किमर्थं पुनरिदमुच्यत इति कर्मणः कर्तृत्वाऽसम्भवात् सूत्रं व्यर्थमिति प्रश्नः। तत्सम्भवम्प्रदर्शयति कर्मकर्त्तरीति। स्वातन्त्र्यञ्च प्रधानधात्वर्थाश्रयत्वम्। तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे सम्भवतीत्याह पच्यत इति। कुसूले क्रियाऽदर्शना दाह विशरणेति। भाष्ये विग्रहवतैवेति सशरीरेण चेतनेनैवेत्यर्थ। निरभिवर्षे इति अनातपे इत्यर्थः। ननु सुकरता यदि प्रयोजकव्यापारस्तर्हि तस्य देवदत्तः कर्त्तेति, 'नाऽन्य' इति भाष्यमनुपपन्नं स्यादत आह द्विधेति। सुकरताविषयक्रिया 'सुकरता' शब्देनोच्यत इत्यर्थः। कर्मगतसौकर्यं निरीक्ष्यैव देवदत्तादेः कर्तृत्वं नाऽन्यथे-

त्याह अन्यथेति। एवञ्च सौकर्यातिशयविवक्षया विद्यमानोऽपि कर्तृव्यापारो न विवक्ष्यते। किन्तु अनेकार्थत्वाद्धातूनां कर्मनिष्ठव्यापारमात्रपरता। तदा कर्मणः कर्तृत्वे 'कर्मणा तुल्यक्रिय' इत्यत्राऽवस्थान्तरीयकर्मणा तुल्यक्रियत्वमित्येवार्थो विवक्षित इति दिक्। लान्तस्येति षष्ठी वाच्यवाचकसम्बन्धे निमित्तनिमित्तिभावे चेत्याह लान्तेति। लान्तवाच्य इत्यर्थस्य फलमाह तेनेति। षष्ठीतृतीये इति 'कृत्यानां कर्तरि वा' इति वचनादिति भावः। यद्यपि स्वाश्रयाऽनिवृत्तेर्भावे सिद्ध्यन्त्येव तव्यादयस्तथापि भेत्तव्यः कुसूलः स्वयमेवेत्यपि स्यादिति दोषः। भाष्यस्यापि 'भेत्तव्यं कुसूलेन' इति 'भाव' एव कृत्यो यथा स्यादित्यर्थो वोध्यः। लान्तकार्य एवेति। अस्य फलमाह 'भिद्यते कुसूल' इति। कर्त्तरि लेऽपि कर्मवद्भावेन द्वितीया स्यादिति भावः। ननु द्व्यङ्गविकलमेतत् कर्मत्वेनानऽभिहितत्वेन च। तत्राऽतिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेतिचेन्न कार्यातिदेशेऽनेनैव द्वितीया विधीयतेः तत्र चाऽनभिहिताऽधिकाराऽभाव इत्यभिमानात्। वस्तुतः कर्मवदित्युक्तेः कर्मणि यत्कार्य्यं येनोपाधिना यथा भवति तथा कर्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाल्लान्तस्य कार्ये इति चिन्त्यं फलम्। अत्र भिन्नं कुसूलेन' इत्यत्र। अत्र कर्मवत्त्वाऽभावेऽपि अकर्मकत्वनिवन्धनकर्तृक्तमादाय 'भिन्नः कुसूल' इत्यस्य दुर्वारत्वेन तत्प्रवृत्त्यप्रवृत्त्योर्न फलमिति भावः। तद्ध्वनयति तथा हीत्यादिना। गवा दुग्धमिति अत्र गोः कर्मवत्त्वे 'अप्रधाने दुहादीनाम्' इति वचनात्तस्मिन्नेव कर्मणि क्तःस्यात्। तदभावे तु कर्मान्तराऽभावात्पयस्येव कर्मणि क्ते 'गवा दुग्धं पय' इति भवतीत्यर्थः। वस्तुतस्तु कर्मवद्भावेन कर्मणि क्ते 'परशुभिन्नः कुसूल' इत्यादौ तृतीयान्तं पूर्वपदं कर्म-

वाचकक्तान्त उत्तरपदे प्रकृतिस्वरमित्यर्थक 'तृतीया कर्मणि' इत्यनेन पूर्वपदप्रकृतिस्वरः प्राप्नोति । कर्त्तरि तु नेति फले विशेषस्य स्पष्टतया चिन्त्योऽयं कैयटः । कर्मणि प्रत्ययेनैव प्रयोगाणां सिद्धेः सूत्रं व्यर्थमित्याशंकते भाष्ये सिद्धन्त्विति । आत्मसंयोग इति आत्मवाचकपदसमभिव्याहारे इत्यर्थः । अकर्मकर्तरिति कर्मभिन्नस्य कर्तुरात्मनः सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा भिद्यते कुसूल इत्यादावपि आत्मनः कर्तृत्वात् कर्मण्येव लकारेण सिद्धम् । अत एव 'आत्मना' इत्यर्थकं स्वयमेवेति कर्मकर्त्रुदाहरणेषु प्रयुज्यत इति तात्पर्यम् । समाधत्ते विषम इति । तत्र हृत्स्थं वैषम्यं दर्शयति दृष्टान्त इति । भावे ल इति इदमुपलक्षणं तव्यादीनाम् । एतेन 'भिद्यते कुसूलेनात्मा' इति कर्मण्येवाऽपप्रयोग इत्यपास्तं भेत्तव्यमीषद्भेदमित्याद्यसिद्ध्यापत्तेः । न च तत्राऽपि कर्मणि नियमेन नपुंसकप्रयोगाऽनापत्तेः हृत्स्थमुक्तं वैषम्यं विघटयति भाष्ये हन्त्यात्मानमित्यादिना । एव श्चात्र शब्देन प्रतिपादनाऽभावेऽपि यथा कर्मत्वं तथा प्रकृतेऽपि भविष्यतीति भावः । वैषम्यमुपपादयति पदलोपश्चेति । तद्व्याचष्टे गम्यमानेति । एवञ्च 'झटिति' इत्यध्याहारसम्भवाद्वाक्यैकदेशन्यायेन बोधसम्भवाद्वा तत्राऽऽत्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भावः । ननु कर्मवद्भावविषयेऽपि 'स्वयम्' इत्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राऽप्यस्त्येव भेदस्य शब्देन प्रतिपादनमत आह यत्त्विति । नत्वेतदिति 'आत्मना' इत्यर्थकस्वयंपदघटितं विवक्षितात्मकर्तृकमित्यर्थः । नन्वेकस्यैव वस्तुनः कथं शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते भाष्ये कः पुनरिति । आत्मानं हन्ति य आत्मा स क इत्यर्थः । औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशयः । संयोगस्य कर्मणीति अन्योन्यसंयोगकृतहर्षादिलक्षणस्येत्यर्थः ।

ननु संयोगस्य तत्कृतहर्षादेश्च कर्तर्यपि सत्त्वेनोक्तरीत्या कथं कर्मस्थत्वमिति चेन्न हर्षरूपविशेषस्य धात्वर्थकर्मत्वकृतत्वेन कर्मस्थत्वमेवेत्याशयात् । यद्यप्युक्तरीत्या नेदमुदाहरणं तथाप्ययमत्र भाष्यार्थः । कर्मपदेन तत्स्थक्रिया लक्ष्यते 'मञ्चाः क्रोशन्ति' इतिवत् । अन्यतरक्रियां प्रति कर्मण्यन्यतरस्मिन् या संयोगानुकूलक्रिया तादृश्येवाऽपरस्मिन् कर्त्तरीति स्यादेव प्रसङ्गः । यद्यपि 'देवदत्तादयः पचन्ति' इत्यादाविव धातुना भेदस्याऽप्रतीतिस्तथाप्याश्रयभेदकृतं वास्तवं भेदमादाय तुल्यत्वाऽक्षतिः । कर्मत्वोपयोगिक्रिया तुल्या यस्य कर्तुरित्यर्थे तु न मानमिति बोध्यम् । । एकयोगे नियमद्वयाऽलाभादाह योगविभागेनेति । भाष्ये किमिदं तप इति । सूत्रे तपः कर्मकस्येत्यत्र 'तपः' पदेन किमुच्यत इति प्रश्नः, धात्वर्थः सन्ताप इत्युत्तरम् । दुःखार्थत्वादिति 'तापसं तपस्तपति' इत्यतस्तं दुःखयतीत्यर्थावगमात् । अर्जनार्थत्वादिति 'तापसस्तपस्तप्यत' इत्यतोऽर्जयतीत्यर्थावगमादिति भावः । शरीरेति शरीरसन्तापलक्षणायाः क्रियाया अवस्थाद्वयेऽपि तुल्यत्वात् यतः शरीसन्तापलक्षणमर्जनमेव तापसस्य व्यापारो नाऽन्य इत्यन्वयः । अयं भावः । 'तपति तापसं तप' इत्यस्य सन्तापविशेषस्तापसं तपतीत्यर्थः । तपतिरत्राऽन्तर्भावितण्यर्थः । तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः । तदनुकूलो व्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप एव तापसे शरीरसन्तापसामान्यानुकूलव्यापारश्च सन्तापविशेषस्वीकार एव । ण्यर्थत्यागे तापसस्य कर्तृत्वम् । 'तापसस्तपः सन्तप्यत' इत्यत्र सन्तापविशेषाऽभिन्नशरीरसन्तापाऽनुकूलव्यापारस्तापसकर्तृक इति बोधः । कैयटे 'शरीरसन्ताप' पदेन स व्यापार एव । तदेव वाऽर्जनमिति बोध्यम् । तत्र क्रियाविशेषणत्वात् 'स्तोकमेधत'

इत्यादाविव तपसः कर्मत्वमिति । भाष्ये तपेरयमौणादिकोऽस्कारो भावसाधन इति इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम् । अव्युत्पन्नत्वमिति पाणिनिसम्मते पक्षे तु 'तपः' शब्दस्य सन्तापोऽर्थ इति बोध्यम् । एतदेव परसम्मताऽन्वाख्यानेन दर्शितम् । ननु प्रकृतिप्रत्यययोरप्रकृतत्वात्प्रश्नाऽनुपपत्तिरत आह तापसेनेति । प्रकृत्यर्थस्यैवेति सन्तापस्येत्यर्थः, तस्यैव 'तपः' पदार्थत्वादिति भावः । प्रत्ययार्थत्वम् तिङ्प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न कर्तृसाहचर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात् । तथाऽपि भाष्यप्रामाण्यात्सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव । अत एव 'स्तोकम्' इत्यादेः क्रियाविशेषणस्यैकत्वनपुंसकत्वे अपि । 'एतान् पोषानपुषद्' इत्यादौ पुंस्त्वबहुवचने इति बोध्यम् । ज्ञानलक्षणं तप इति ज्ञानजनकोपवासादिरूपमित्यर्थः । स एव सन्ताप इति भाष्यस्य स एव सन्तापविशेष इत्यर्थः । विशेषेऽपि 'सामान्य' सत्त्वात् स एवेत्यस्य नाऽनुपपत्तिः । भाष्ये 'एतान् पोषान्' इत्यस्य विशेषसमर्पकाणि 'गोपोषम्' इत्यादीनि घञन्तानि बोध्यानि । अत्यन्तमप्राप्त इति तुल्यक्रियत्वस्याप्यभावादिति भावः । सकर्मकाणाम्प्रतिषेधोत्तरमस्योक्तत्वेन दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताऽप्राप्तावेवैतस्य विध्यर्थतोचितेति ध्वनयन्नाह अन्ये त्वाहुरिति । वृक्षस्य पाकमिति वृक्षनिष्ठपाकानुकूलव्यापारं विनेत्यर्थः । तदा च कालस्य कर्तृत्वं बोध्यम् । एवञ्च पचेः फलपाकानुकूलव्यापाराऽनुकूलव्यापारोऽर्थः । तत्र फलपाकानुकूलव्यापाराऽऽश्रयत्वात् कर्तुरीप्सितमिति 'वृक्षः' कर्म । तस्य कर्तृत्वविवक्षायां भाष्योदाहरण *

* भाष्योदाहरणम् इति खपुस्तके पाठः ।

साम्राज्याद्व 'अकथितं कर्म' इत्यत्र 'अकथितपदम्' अविवक्षित-परम् । कर्मत्वेनाऽविवक्षितमित्यर्थः । किं ते न तर्हि विवक्षेत्यत्राह तस्यैव चेति । न तु तत्सूत्रविषयता अस्य दुहादिषु भाष्येऽगणनात् । 'गौर्दुग्धे' इत्यपि कर्तुरीप्सिततममिति कर्मत्वे एवोदाहरणं बोध्यम् । विभागानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तं तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वाऽनुपपादनादित्याहुः । यद्यपि कालस्य कर्तृत्वविवक्षायां कर्मणि लकारेऽपीदं सिद्ध्यति तथाऽप्युदुंबरस्य कर्तृत्वविवक्षायामुदुंबरः फलं पचतीत्येतद्व्यावृत्तये इदम् । न पुनरोदनमिति कर्मस्थक्रियया तुल्यक्रियत्वाऽभावादिति भावः ।

श्रद्धायुक्ते कर्तरीति मुख्ये कर्तरीत्यर्थः । श्रद्धा आदरः, तेन युक्तो मुख्य एव, तस्यैव क्रियायामादरादिति बोध्यम् । तेनाऽत्यन्ताऽप्राप्तौ विध्यर्थोऽयमंशः । श्यन्यको विशेषमाह श्यनि त्विति । मुख्यकर्तृत्वं निदर्शयति श्रद्धयेति । तत्र सृजेः कर्तरि श्यन् सिद्धः । 'चिण्' आत्मनेपदे एव कर्मवद्भावप्रयोजने । श्यनस्तु कर्मवद्भावलब्ध 'यका' बाधा माभूदिति प्रतिप्रसवमात्रम् । 'दैवादिकः सृजिरकर्मक एव' इति त्वश्रद्धेयमेवेति केचित् । न्याय्ये इति न्याय उत्सर्गसूत्रं 'कर्मवत्कर्मणा' इति, तदनपेते तत्प्राप्तियोग्ये इति यावत् । सकर्मकत्वात्तदप्राप्तौ विधिः । श्यन् तु अप्राप्त इव विधीयते यग्बाधनायेति विशेषः । यकोऽभावायेत्यस्य श्यन् त्विति आदिः योगो ब्रह्मचारिणमिति पूर्वकृत्तेऽयम् । संबध्नातीति अस्य संबन्धानुकूलव्यापारवान् भवतीत्यर्थः । ततः इति प्रतियोगित्वावच्छिन्नः संबन्धो युजेरर्थः । प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम् । यत्तु 'योगम्' इति प्रतियोगे द्वितीया । एवञ्चाऽकर्मकत्वात्कर्मवद्भावे सिद्धे यग्बाधनाय श्यन्मात्रविधानार्थमिदमिति तन्न

'सृजियुज्योः' इति वार्तिके 'सकर्मकयोः' इति भाष्यविरोधापत्तेः ।

भाष्ये परिवारयन्ते कण्टका इति न च 'णिचश्च' इत्यनेनैवात्मनेपदं सिद्धम्, यक्चिणौ तु 'णिश्रन्थि' इति प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यम्' कर्तृगामित्वाऽभावेऽप्यात्मनेपदार्थं चिण्वद्भावार्थश्च वार्तिकस्याऽवश्यकत्वात । स्रवति कुण्डिका उदकमिति अस्य निष्क्रामयतीत्यर्थः । स्रवति कुण्डिकाया इति अस्य निष्क्रामतीत्यर्थः । तदाह निष्क्रामदिति । ननु विसर्गोऽपि विभागाऽनुकूलव्यापारो निष्क्रामणादनतिरिक्तोऽत आह विसर्गश्च दानमिति । मुख्यदानपदार्थस्यऽत्राऽऽरोप इति भावः । सिद्धत्वादिति वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि 'स्यतासि' विषये चिण्वद्भावाऽभावाय ण्यन्तेऽपि एतत्प्रवृत्तिरावश्यकी अन्यत्राऽप्यात्मनेपदादित्यनेन तस्याऽप्यत्र निषेधात् । 'णिश्रन्थि' इत्यनेन तु न सिद्धिः न हि चिण्निषेधेन चिण्वद्भावनिषेधो लभ्यत इति चिन्त्यमेतत् ! कर्तृत्वेन हस्तीति अवकिरते व्याप्तो भवतीत्यर्थ इति भावः । आद्यकक्षायां विक्षेपणेन व्याप्तं करोतीत्यर्थः । भाष्येऽवाकीर्ष्टेति 'अन्यत्राऽऽत्मनेपदाद्' इत्युक्ते चिण्वद्भावोऽपि नेति भावः । अत एवेदं वार्तिकं 'न दुह' इत्यत्र न पठितम् । चिकीर्षेरिच्छावाचकत्वात्कर्मक्रियत्वाऽभावमाशंक्याह करोतिक्रियापेक्षमिति । ननु यतः परत्ववाच्यस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह आर्थाच्चेति ॥८७॥

---

## न दुहस्नुनमां यक्चिणौ ( ३।१।८९ )

अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियकर्त्रभावात्कर्मवत्त्वाऽप्राप्तौ निषेधो व्यर्थोऽत आह आत्मनेपदेति । सकर्मका भव-

न्तीति ततो व्यापारनिवृत्तौ यदा कर्मकर्तृत्वमिति शेषः । व्यकृषतेति अत्र 'चिण्वद्भावोऽपि न' इति कैयटाशय माहुः केचित् । 'कृञ' इत्यनुवर्त्तमाने 'वेः शब्दकर्मण' 'अकर्मकाच्च' इत्यत्राऽयं निर्दिष्टः । परे तु पक्षे चिण्वद्भावे 'व्यकारिषत' इत्यपि बोध्यम् । यदि चिण्प्रतिषेधो चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्तर्हि 'भूषाकर्म' इति पूर्ववार्त्तिकमप्यत्रैव कुर्यात् । एतद्वा तत्रैव कुर्यात् । विभेदेन करणाच्च चिण्वद्भावस्य प्रतिषेधोऽनेन नेति ध्वनयति । 'चिण' उदाहरणमेकवचने बोध्यमित्याहुः । *भारद्वाजीयानां 'हेतुमत्' पदत्यागे वीजमाह उत्पुच्छयते इति । अत्र यगादिकं न । ब्रूते कथेति 'अत्र' इति शेषः । प्रकाशनफलकं वचनं ब्रूञोऽर्थः, प्रकाशनस्य कर्ममात्रनिष्ठत्वात् शब्दे प्रकाशनकृतविशेषदर्शनाच्च कर्मस्थत्वं बोध्यम् ॥ ८९ ॥

---

## कुषिरजोः प्राचां श्यन्परस्मैपदञ्च । (३।१।९० ।)

यक्श्यनोर्विशेषं दर्शयति ञ्नित्यादिरित्यादिना । परस्मैपदस्य सार्वधातुके विधानाऽसम्भवादाह विषयेति । लिङ्लिटोः प्रतिषेध इति तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः । ननु 'कुष्णाना' इत्यत्र परस्मैपदाऽप्राप्तेस्तन्सहचरितः श्यन्नपि नेत्यत आह परस्मैपदञ्चेति । विशेषविहितत्वादिति लट्, लुट्' लुङ् व्यतिरिक्ते श्यनश्चारितार्थ्यादिदञ्चिन्त्यम् । 'परत्वाद्बाध' इत्युचितमिति कश्चित् । भाष्ये पूर्वस्मिन् योग इति 'कर्मवत्कर्मणा' इत्यत्र । ले च सार्वधातुके चेति लसार्वधातुकयोर्वाच्यत्वेन स्थितः कर्मवदित्यर्थः । भिन्दाना इति

---

* भारद्वाजीयाः वार्तिककाराः इति सं० ।

चानश्। इहाऽपि लेति 'कुषिरजोः' इत्यत्रापि, लादेशसार्वधातुकविषये इत्यर्थ इति भावः। अकृतेष्वेव लादेशेष्विति निरवकाशत्वाऽभावेऽपि विशेषविहितत्वस्य ❀ पूर्वप्रवृत्तिप्रयोजकतेति भावः। परे तु 'स्यतासी' इति सूत्रे 'आयादय' इत्यत 'आर्धधातुक' इत्यनुवर्त्य तत्त्वाऽवस्थायामेव स्यतासी। अतोऽकृतेष्वेवादेशेषु तत्प्रवृत्तिः। इदमेवाऽभिप्रेत्य भाष्ये लावस्थायामित्युक्तमित्याहुः। श्यनो विरोधादिति उभयोः परत्वाऽसम्भवरूपो विरोधः॥ ६०॥

---

## धातोः (३।१।६१।)

तथाऽपीति धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातं यत्स्वरितत्वं तत् 'क्व' इति न ज्ञायत इति योजना। 'अनुदात्तङित' इत्यादिभिर्लादेशविधानात्तत्र धात्वधिकाराऽभावात् भाष्ये उक्तम् आद्ये योग इति। सर्वेषामेतन्नियामकत्वात् 'तिप्तस्झि' इत्यस्याऽऽद्यत्वमिति भावः। आद्ये योगे 'धातोः' इत्यस्य संबन्धे व्यवधाने तिङो न स्युरिति संवन्धः। 'पचति पठति' इति भाष्योदाहरणाऽसंगतिं मत्वाऽऽह यदा त्विति। इदमेवाऽभिप्रेत्य विकरणानामादेशाऽपेक्षया नित्यत्वं वक्ष्यति। भाष्ये टित्संज्ञानामिति इत्संज्ञकटकारवतामित्यर्थः। एकारस्यैकारवचने इति यद्यपि विशेषविहितत्वात् 'टित' इति वाधित्वा 'लिटस्तझयोः' इति प्राप्नोति तथापि एकारस्य सिद्धावेकारवचने प्रयोधनं नास्तीति व्याख्येयम्। सर्वादेशो भविष्यतीति निर्दिश्यमानपरिभाषयेति भावः। यः थस्येति 'परस्मैपदानाम्' इत्यनेन। भाष्ये सार्वधातुके विकरणा इति

---

❀ खपुस्तके 'विहितस्य' इति पाठः।

विषयसप्तम्यान्तु परिभाषाबाधः स्यादिति भावः। अत्राऽपीति सिद्धमिति शेषः। कथं? तत्राह धातुग्रहणमिति। टेरेत्व-सिद्धये विषयसप्तमीवादिनोऽपि विहितविशेषणमावश्यकमिति भावः। अपिबन्निति शवेकादेशस्य परादिवत्त्वेन ग्रहणा-दिति भावः। 'लङः शाकटायनस्य' इति जुस् प्राप्तः। वस्तुतः क्वचिद्विहितविशेषणमिति सर्वत्र तदेवाश्रयणीय-मिति न नियम इति न दोषः। भाष्यकारस्तु तथाऽऽश्रयणेऽपि अभ्युपेत्यवादेन दोषाऽभावं प्रतिपादयति। चक्रक्रमव्यव-स्थेति भाष्ये चक्रकरूपाऽव्यवस्थेत्यर्थः। आयन्नादिष्विति आदिना झोन्तस्यापि ग्रहणादिति भावः। उपदेशकाल एवेति उपदेशोत्तरकाले कार्यान्तरात्पूर्वमेवेत्यर्थः। भाष्ये अन्तिभावे कृते लोप इति नचाऽन्तरङ्गत्वात्पूर्वं कृतेऽप्यन्तौ लोपात्पूर्वं स्थानिवद्भावेन झित्वाज्जुसप्राप्नोति अनाङ्गत्वेनाऽन्तरङ्गत्वा-दिति वाच्यं 'झेर्जुस्' इत्यत्रेकारस्योच्चारणार्थत्वेनाऽल्विधि-त्वेन स्थानिवत्त्वाऽभाव इत्याशयात्। वस्तुत 'आत' इत्यत्र सिज्ग्रहणाऽनुवृत्तेस्तत्सूत्रस्थभाष्ये 'च्लि लुङि' इति सूत्रस्थ-भाष्ये चोक्तत्वेन न क्वाऽपि दोषप्रसङ्ग इति ध्येयम्। प्रकृत सूत्रस्थभाष्यन्त्वेकदेशयुक्तिः। द्वितीयादीति ता हि यथा शब्दान्तरवाच्यक्रियाऽपेक्षे स्वप्रकृत्यर्थस्य कर्मत्वे विधीयन्ते तथा तव्यादयोऽपि स्युरित्यर्थः। द्वितीयादिभ्यो वैषम्यमुपपा-दयति प्रकृतीति। येऽपभ्रंशेति स्वप्यपभ्रंशत्वात् क्रिया-वाचकत्वमेषामस्तीति भावः। ततः प्रत्ययोत्पत्तिरिति 'सुपति' इत्येतद्घटकात्सुपेरित्यर्थः। भाष्ये कृत्संज्ञा च प्रयो-जनमिति एतद्धात्वधिकारे धातोर्विहितस्य कृत्संज्ञकत्वम्। अन्यथा स्यादीनामपि तत्त्वं स्यादिति भावः। एवं 'च्लि लुङि' इत्यादेर्लुङन्ते उपपदे इत्यादिक्रमेणार्थः स्यादिति बोध्यम्।

अधिकाराद्ध्येत इति 'कृदतिङ्' 'तत्रोपपदम्' इत्यनयोरधिकारत्वादित्यर्थः। ननु 'चुरादिभ्य' इत्यनेन स्वार्थे विधानात्प्रयोजकव्यापारे णिजर्थं 'हेतुमति च' इत्यावश्यकमत आह यद्य विशेषेणेति। हेतुमत्यपीति अपिना स्वार्थरूपकरणसंग्रहः। नन्वेवं चुरादिग्रहणमेव ज्ञापकं किमिति नोक्तमत आह चुरादीति। प्रातिपदिकाद्धात्वर्थे 'संग्राम युद्ध' इत्यादितद्गणपठितेभ्योऽधातुभ्यो णिजर्थमित्यर्थः। परे तु चुरादिग्रहणं स्वार्थरूपकरणे विध्यर्थम्। अन्यथाऽन्यधातुभ्य इव तेभ्योऽपि प्रयोजकव्यापाररूपे करणे एव स्यात्। एवञ्च 'प्रातिपदिकाद्धात्वर्थे' इत्यस्याऽनार्षत्वेऽपि न दोष इत्याहुः। धातुमात्राद्यक इति धातुमात्राद्यक्ो विधायकेन तेषामपि यकः सिद्धत्वादित्यर्थः। विहितविशेषणेति स्वरितत्वद्वयं प्रतिज्ञाय तत्सामर्थ्याद् 'धातोः' इत्येवं विहितेत्यर्थः कार्य इति भावः। तदाह जुगुप्सत इत्यादि। नन्वेकेन धातुग्रहणेन कथमेषोऽर्थो लभ्येताऽत आह शमिधातोरिति। 'वासरूप' इत्यप्यधिकार एवेति, एतदभावे क्सादिभिः सिचः समावेशः स्यादिति न शंक्यम् ॥ ९१ ॥

---

## तत्रोपपदं सप्तमीस्थम् ( ३।१।९२। )

ननु 'स्थ' ग्रहणाऽभावे सप्तम्या एव संज्ञा स्यादत आह सप्तमीशब्देनेति। सूत्रस्थसप्तम्यन्तपदनिर्दिष्टं 'सप्तमी' पदेन लक्ष्यत इत्यर्थः। ननु प्रत्ययग्रहणे तदन्तग्रहणात्कथं सप्तम्या एव संज्ञेत्यत आह संज्ञेति। नन्वेवमुपपदसमासोऽपि सप्तमीमात्रस्य स्यादत आह समासस्त्विति। सूत्रे 'सप्तमी' पदं विभक्तिपरं स्वरूपपरं वा। आद्ये सप्तम्या एव संज्ञा। अन्त्ये तु यत्र सप्तमीपदं तत्रैव स्यादित्याह यदेति। तथा सति यदेत्यर्थः। इत्यादा-

विति आदिना 'सप्तम्यां चोपपीड' इति संग्रहः। ननु 'स्थ' ग्रहणेऽपि कुम्भादीनां सप्तमीस्थत्वाऽभावात्कथमुपपदत्वं तत्राह स्थग्रहणे त्विति। अयं भावः। सप्तमीपदं तदन्तपरं संज्ञाविधौ प्रत्ययांशे तदन्तविधिप्रतिषेधस्तु उद्देश्यप्रत्ययांशे एव। तत्स्थत्वञ्च तद्वाच्यत्वमिति तदाह सौत्रसप्तम्युपलक्षितस्येति। सौत्रसप्तम्यन्तपदबोध्यस्येत्यर्थ। धातोरित्यनुवर्त्तनादिति धातोरित्यधिकारविहितप्रत्ययविधौ सप्तमीस्थमित्यर्थादिति भावः। धातोरित्यनुवृत्तावपीदृशार्थाऽलाभादाह अथ वेति। अत्रैवेति न तु 'च्लि लुङि' इत्यादाविति भावः। उपपदसंज्ञा भवतिइति भाष्यस्याऽपीष्टविषये स्फुटतया सिद्धा भवतीत्यर्थः। विभक्तिमन्तरेणेति तामन्तरेण कर्मत्वाभावादित्यर्थः। शब्दस्य कर्मत्वादि हि तद्विशिष्टार्थवाचकत्वमेवेति भावः। चतुष्कपक्षे इति संख्यातिरिक्तं चतुष्कं प्रातिपदिकार्थ इति पक्षे इत्यर्थः। प्रातिपदिकस्यैवेति चिन्त्यमिदम् 'पञ्चक' पक्षेऽपि द्योतकसमभिव्याहारं विना प्रातिपदिकमात्रस्य तद्बोधकत्वाऽभावात् 'प्रं' विना 'जयतेः' प्रकृष्टजयबोधकत्ववत्। एवञ्च तत्पक्षेऽपि पदविधित्वं दुर्वारमेव। तस्मादयमत्र भाष्यार्थः। सुबन्तत्वेन पदत्वेन वा यत्र निमित्तता तत्रैव तत्परिभाषाप्रवृत्तिरिति। प्रकृते तदभावात्परिभाषाऽनुपस्थित्या समर्थग्रहणं कर्त्तव्यमिति युक्तमाभाति। भाष्ये समर्थमुपपदमिति सामर्थ्यञ्च प्रत्यासत्त्या प्रत्ययान्तेनैवेति बोध्यम्। प्रत्ययस्योत्पत्तौ निमित्तं यत्समर्थं सप्तम्यन्तपदवाच्यं तदेवोपपदसंज्ञमिति वक्तव्यमित्यर्थः। ननु 'महान्तं कुम्भम्' इति सविशेषणे कथं सामर्थ्यमत आह महत्त्वयुक्तस्येति। विशिष्टस्यैव कर्मत्वेन विशिष्टेन सामर्थ्यमस्तीति भावः। तदा न भवितव्यमिति भाष्ये अणेति शेषः। तदा च प्राप्नोतीति अस्याऽप्यणित्येव शेषो न तु 'महाकुम्भकार' इति तद्ध्वनयन्नाह

महच्छब्देन समासो न स्यादिति । कारार्थविशेषणतयोपस्थितस्येतरविशेष्यत्वाऽसंभवेन महच्छब्देन कुम्भशब्दस्य कर्मधारयो न स्यादिति भावः । बहुलवचनेनोत्तरपदे 'विशेषणं विशेष्येण' इत्यस्य तत्प्रपञ्चभूतानाम्पूर्वनिपातनियमार्थानाञ्च निवृत्तेः समर्थसूत्रे भाष्ये ध्वनितत्वादिति निरूपितं समर्थसूत्रे भाष्ये । न च पूर्वं कर्मधारयः, उपपदसमासस्य परत्वादिति बोध्यम् । ननु समुदायेनैवोपपदसमासो भविष्यतीत्यत आह सुवन्तसमुदायस्येति । वस्तुतः प्रथमान्तनिवृत्तावपि समुदायेन समासेऽपि 'कुम्भ' शब्दस्योत्तरपदत्वाऽभावादात्वाऽभावे 'महत्कुम्भकार' इत्यनिष्टस्याऽऽपत्तिरिति भाष्याशयः । यदुक्तं कुम्भशब्दस्य कारशब्देन समास इति तदपि चिन्त्यम् कुम्भशब्दस्य केवलस्य सविशेषणत्वेनाऽसमर्थत्वात्समासविधौ समर्थपरिभाषोपस्थानेन समासाऽप्राप्तेः । भाष्यं तु सर्वथा समासाऽभावेऽप्यणापत्तिपरतया योजयितुं शक्यमेवेति दिक् । यावता चेदानीमिति भाष्यमवतारयति कुम्भमित्येतच्च । यद्यपीति । समाधानाशयमाह तथाऽपीति । भाष्ये 'गन्ध' शब्दः संबन्धवाची स च महासंज्ञावलात्प्रत्ययविधौ पदत्वेन निमित्तत्वात्स्पष्ट एव । असामर्थ्यात्प्रत्ययाऽभावे चोपपदसंज्ञाऽपि फलाऽभावान्नेति उपपदसंज्ञायां समर्थवचनमनर्थकमिति भावः । एवञ्च सुवन्तस्यैवोपपदत्वम् । 'स्तम्बकर्णयोः' इत्यादौ तु तत्प्रकृतिके लक्षणा । इदमेवाऽभिप्रेत्य 'उपपदमतिङ्' इति सूत्रे प्रथमान्त'सुप्' पदस्याऽपि निवृत्तिर्भगवतोक्तेति दिक् । कर्मत्वं मन्यत इति स्वरादिवदिति शेषः । तत्र हेतुमाह सत्त्वेति । च्विप्रत्ययेऽपि स्वाश्रयसत्त्वभावस्य निवृत्तौ मानाऽभावादिति भावः । सत्त्वभूतस्येति पाठेऽपि भावे क्तः । प्रकृतिविवक्षायामिति भाष्यस्य प्रकृतेर्विकृत्यभिन्नत्वेन विवक्षायां विकृतिवाच-

कात् च्विरित्यर्थः । तत्फलितमाह प्रकृतीति । तत्राऽवश्य-मिति । नन्वेवं नित्यसापेक्षत्वेना ❀ सामर्थ्याऽभावादण् दुर्वारः, तदनपेक्षायां च्वेरभावेन च्व्यन्तस्य नित्यसापेक्षताया उपपादितत्वादिति चेदत्र महद्भिर्यतनीयम् । मम तु प्रतिभाति न नित्यसापेक्षत्वं वृत्तौ प्रयोजकं किन्तु गमकत्वम् । एवञ्च नित्यसापेक्षत्वेऽप्यगमकत्वान्न वृत्तिः । 'काशकटीकारम्' इत्यत्र तु गमकत्वाद्भवत्येवेति स्पष्टञ्चेदं 'समर्थ'सूत्रे 'सुप आत्मन' इति सूत्रे च भाष्ये सूक्ष्मदृशाम् । भाष्ये अधिकारादपीति । नन्व-धिकारादेतस्मिन्धात्वधिकार इत्यर्थवत्तत एव प्रतिसूत्रमुपपदसं-ज्ञाविधानेन 'सन्नियोगशिष्ट' न्यायात्तत्र सत्येव प्रत्ययो भवि-ष्यति किं 'तत्र' ग्रहणेनेति चेन्न तदभावे 'अन्वाचयः शिष्टत्व-मपि सम्भाव्येत' इति स्पष्टप्रतिपत्त्यर्थमिति तत्त्वम् ॥ ९२ ॥

---

## कृदतिङ् ( ३।१।९३ ।)

भाष्ये एकदेश्याह पचतीत्यादि । शङ्कितेऽऽह शक्यमकर्त्तु-मिति । तदुपपादयति स एव धातोः परस्येति 'धातोः' इति पदमुच्चार्य धातोः परत्वेन विहितस्येत्यर्थः । अत एव वक्ष्यति 'प्राक् च लादेशाद्धात्वधिकार'इति । एवञ्च तिङ्षु कृत्संज्ञाया अप्राप्त्या निषेधो व्यर्थ इति भावः । तत्सार्थक्यमेकदेशी शङ्कते एवमीति । सिद्धान्ती शिष्यबुद्धिपरीक्षायै प्रतिवादिनमाह † अथेति । एकदेश्याह प्रतिषेधेति । तृतीयाऽध्यायान्तं धात्व-धिकारे तिङो व्यावृत्त्या तत्सार्थक्यमत आह अथ वेति । तिङ्-भावीति । अत एवाऽऽमन्तविषयलकारस्य कृत्त्वम्भवत्येव तस्य तिङ्भावित्वाऽभावात् । तिङ्भावित्वस्य फलोपहि-

---

❀ उभयपुस्तकेऽयमेव पाठो दृश्यते ।

† प्रतिवंदीमाह इत्युभयत्र पाठः ।

तस्यैव निवेशात् । मूलोच्छेद इति मूलभूते लकार एव कृत्स्नोच्छेदः क्रियत इत्यर्थः । 'भो भगो' इति सूत्रभाष्योक्तरीत्याऽल्विधित्वादप्यत्र स्थानिवत्त्वप्रतिषेध इत्यपि बोध्यम् । अथ तृतीयाऽध्यायान्तं धात्वधिकारेऽपि भाष्ये फलाऽभावान्निषेधम्प्रत्याख्यातुमाह किञ्च स्यादिति । एकत्वादिष्विति । ननूक्तेऽप्येकत्व एकशब्दात्कर्मत्वमात्रप्रतिपत्तये द्वितीयावत् 'पचती ❀ पश्य' इत्यादौ कर्मत्वोक्तये द्वितीया स्यात् । किञ्च, 'एकवचनमुत्सर्ग' इति तदुर्वारमिति चेन्न कर्मत्वस्याऽपि वाक्येन प्रतीत्या तदनुत्पत्तेः । तिङोक्ता इति अस्य च तिङ्घटितवाक्येनोक्ता इत्यर्थः । एकत्वादिपदेन कर्मत्वादीनामपि ग्रहणं बोध्यम् उत्सर्गोऽव्ययविषय एवेत्याशयात् । तिङन्तस्येति तदर्थक्रियाया इत्यर्थः । भाष्ये अथाऽपि कथञ्चिद्योगः स्यादिति । 'शेष' इत्यस्य विधायकत्वात् 'दृषदि पिष्टा' इत्याद्यर्थे इव पचत्यादिभ्यः पश्यत्याद्यर्थे प्रत्ययः स्यादिति भावः । न तिङन्तादिति । अयमत्राऽभिसन्धिः, तिङन्तानां कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाऽभावो ज्ञाप्यत इति 'पचति' भवति, इत्यादौ प्रथमाऽपि नेति बोध्यम् । 'पचेरन्' इत्यादौ नलोपश्चात एव न । अत एव 'अहन्' इत्यादौ न दोषः । परशब्दस्येष्टेति अन्तवद्भावस्य प्रायिकत्वेन स्थानिवद्भावस्याभावाऽतिदेशकत्वेन निषेधकतया 'निषेधाश्च बलीयांस' इति न्यायेन 'अचः परस्मिन्' इत्यस्यैव प्रवृत्तिरित्यपि बोध्यम् । यत्किञ्चित्स्थानिभूतादचः पूर्वधर्माऽवच्छिन्नोद्देश्यकत्वाद् 'अचः परस्मिन्' इत्यस्य प्रवृत्तिः । एतेन 'अन्तवद्भावेन शवन्तस्यैव कार्यमिति' पूर्वविध्यभावात्कथं स्थानिवत्त्वम्' इति परास्तम् । स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम्,

❀ एवमेव पाठ उभयत्र ।

तङ्कौण्डिन्यन्यायस्याऽनवकाशविषयकत्वेन विधेयविषयकत्वेन चेदृशे विषयेऽप्राप्तेः। तत्र सूत्रेऽभावाऽतिदेशस्याऽप्यङ्गीकारेण स्थानिनि सत्यभवतस्तुक एकादेशेऽप्यभावाऽतिदेशो बोध्यः। एतेन 'स्थानिवद्भावेऽपि शबन्तस्य शपा व्यवधानाऽभावात्तुक् दुर्वार' इत्यपास्तम्। 'धीर्धियौधिय' इत्यत्र तु न दोषः 'ध्यायतेः सम्प्रसारणञ्च' इत्यनेन सम्प्रसारणे पूर्वत्वे 'हल' इति दीर्घत्वे च कृते एकादेशस्य निवृत्तेस्तस्य स्थानिवत्त्वाऽप्रवृत्तेः ❀। 'जुहुवतुः' इत्यादावपि 'ह्वो, ऽन्तरङ्गत्वादाच्वे 'वार्णादाङ्गम्' इत्यालोपे सम्प्रसारणे एकादेशस्यैवाभावान्न दोषः। स्पष्टं चेदं 'सर्वत्र संप्रसारणिभ्य' इति वार्त्तिकभाष्ये। धियावित्यादाविपङ् । अकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाऽभावाच्च। नकारोच्चारणेति समाधानन्तरमपि प्रागुक्तम्। पृथक् सार्वधातुकेति। न च श्यनर्थं दीर्घप्रवृत्तियोग्याऽजन्तेभ्यः श्यन्भावात् ॥ ६३॥

---

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे पञ्चममाह्निकम् ॥ ५ ॥

---

## वाऽसरूपोऽस्त्रियाम् ( ३ । १ । ६४ )

ननु स्वरूपस्य निषेधे तदा भाव एव स्यादतस्तत्पक्षे वाक्यार्थं दर्शयति स्त्रियामित्युच्चार्येति। स्वरूपस्येति अस्य स्वरूपपरस्येत्यर्थः। निषेधः स्यादिति अस्य निषेधान्वय्यन्वयित्वं स्यादित्यर्थः। ननु ये विहिता स्तेषाम्प्रतिषेधे विधिवैयर्थ्यं स्याद्, विहितप्रतिषिद्धत्वाद्विकल्पो वा स्यादत आह स्त्रियां

❀ अप्रसक्तेः इति क पुस्तके पाठः।

क्तिन्निति तदधिकारे ये विहिता उत्सर्गास्तेषां वासरूपविधिना प्रसक्तानां प्रतिषेधो विज्ञास्यत इति भाष्यात्तरार्थ इति भावः। एवञ्चोत्सर्गाऽपवादयोर्द्वयो* रप्यधिकारनिवेशित्वे सति 'अस्त्रियाम्' इति प्रतिषेध इति लभ्यते। अन्येनाऽपि यत्राऽसमावेश इष्टः सोऽनभिधानात्साध्यः। भाष्ये तत्रोत्पत्तिवाप्रसङ्ग इति उत्पत्तेर्वार्थविकल्पप्रसङ्ग इत्यर्थः। ननु वाधकत्वविकल्पे नायं दोष इत्याशंक्य तद्विकल्प एव न सिध्यतीत्याह वाऽसरूप इति। असरूपोऽपवादो वा भवतीति अपवादपदं वक्ष्यमाणसिद्धान्ताऽभिप्रायेण। बहिरङ्गस्येति शब्दानुपात्तस्येत्यपि वोध्यम्। 'इत्येतन्न' इत्यन्तो भाष्ये छेदः। भाष्ये यद्येतल्लभ्येतेति अपवादपदाऽभावादविषय एव विकल्य इत्यत्र मानाऽभावादपवादोत्सर्गोभयविषयो विकल्पः स्यात्। एवञ्च तद्धित इवोत्सर्गाऽपवादयोर्विकल्पाद्व यत्रोत्सर्गाऽपवादौ विभाषा, तत्राऽपवादेन मुक्ते उत्सर्गाऽप्रवृत्त्या पक्षेऽनुत्पत्तिरेव प्राप्नोतीति भावः। अपवादशास्त्रेणेति कैयटोपपत्तिस्तु चिन्त्या, तद्धितेषु सर्वमुत्सर्गाऽपवादं विभाषेति दृष्टान्तेन मदुक्तार्थस्यैव लाभात्। सिद्धन्त्विति भाष्ये वाधकपदे कृतेऽसरूपस्य वाधकस्यैव विकल्पे उत्सर्गविकल्पाऽभावात्सिद्धमिति भावः। इदञ्चापवादशास्त्रेणैकवाक्यताऽऽपन्नम्। न चैवम् असरूपो वा वाधको भवति' इति भाष्येण वाधकत्वविकल्पप्रतिपादनं व्यर्थमिति वाच्यम् असरूपस्य वाधकस्य वा वचनादिति वार्तिकस्वारस्ये वाऽसरूपो वाधको वा भवतीत्येव भाष्येऽन्वयात्। वार्त्तिकाद्धि वाधकाऽनुवादेन विकल्पविधिरित्येव स्वरसतो लभ्यते न तु वाधकत्वाऽनुवादेनेति दिक्। प्रत्यासत्त्या च यन्निरूपितं वाधकत्वं तस्यैव पक्षेऽभ्यनुज्ञानमिति नाऽतिप्रसङ्गः। कैयटे वाधकत्वे विकल्पित

* द्वयोः इति पदं 'ख' पुस्तके नास्ति।

इत्यादि। इदश्चिन्त्यं वार्तिकोक्तबाधकपदार्थैकदेशस्य बाधकत्वस्य विकल्पेनाऽन्वयाऽयोगात्। किञ्च, पक्षे बाधकत्वाभावे 'शप्तिपोः' इव समुच्चयः स्यादिति महदनिष्टं, धर्मनिषेधे धर्म्यभावाऽप्रतीतेः। अत एव 'न वेति' सूत्रे साधुत्वविकल्पे पक्षे तस्यैवाऽसाधुत्वमापादितम्। क्षिपेरिति धात्वर्थनिर्देशे इक् प्रत्ययः। 'इक् कृष्यादिभ्य' इति इग् वा। तथापीति 'कर्त्ता' इत्यत्र तस्याऽपि सत्त्वादिति भावः। बाधकत्वं बहिरङ्गमपीति। इदश्चिन्त्यम् सामर्थ्यादपवाद एव 'असरूप' शब्देन विवक्षितो न तूत्सर्गोऽपीति तु भाष्यतात्पर्यं बोध्यम्! भाष्ये अथ वा समय इति। एवञ्च समये ❀तत्सूत्रयोरन्यतरस्याऽप्यबाधाय 'असरूप' पदेनाऽपवाद एव गृह्यत इति भावः। इहापि प्रमाणश्चेत्किमेतावता तत्राह समयस्येति। अर्थः प्रत्याययितुमिति न च प्रत्ययाऽनुत्पत्तौ प्रयोगे सामर्थ्यमस्ति 'न केवला प्रकृतिः' इति निषेधात्, नापि प्रयुक्तादर्थबोध इति भाष्यार्थ इति भावः। असरूपशब्देनेति भिन्नरूपो वेत्युक्ते भावाऽभावयोः परस्परभिन्नरूपस्य सत्ताप्रतीतिरिति नाऽनेनोभयोरुत्सर्गाऽपवादयो र्विभाषाबोधनम्। तथा सति पक्षेऽनुत्पत्तिः स्यात्। सा च न रूपवतीति अभावपक्षे न भिन्नरूपस्य सत्ता स्यादिति भावः। नन्वस्तु सामर्थ्यादन्यतरस्य विकल्पो न तूभयोरिति बाधकपदाऽभावे अपवाद एवेति कुतो लभ्यत इत्याशंकते भाष्ये कुत एतदिति। इष्टापत्त्या समाधत्ते न चैवास्तीति। तद्व्याचष्टे उत्सर्गेति। असरूप उत्सर्गो वा भवतीत्यनेन प्रत्यासत्त्याऽसरूपोऽपवाद एव पक्षे स्थाप्यत इति 'क' विषये न 'अण्' इति भावः। वस्तुतो ऽसरूपपदेनाऽपवाद एवोत्तिष्ठत इत्याह भाष्ये

❀ समयेतत्सूत्रयोरिति 'ख' पठति।

अपि च सापेक्ष इति अवधिसापेक्ष इत्यर्थः। भिन्नरूपत्वं ह्यसरूपत्वम्। तत्र कुतो 'भिन्नरूप' इत्यपेक्षायां स्वविधानवेलायां यः स्वविषये प्राप्तः स एव बुद्धिस्थो गम्यतेऽपवाद-विधिसमये चोत्सर्गः। तमपि विषयमुपढौकमान उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एव गृह्यत इत्यर्थ। न चोत्सर्गवेलायामिति। ननु 'अपवादवाक्यार्थोत्तरमुत्सर्गस्य लक्ष्य-संस्कारकता' इति प्रातिपदिकार्थसूत्रभाष्ये उक्तत्वेनोत्सर्गोऽपि स्ववेलायामपवादमपेक्षत इति कथमेतदिति चेन्न लक्ष्यसंस्कारवे-लायामपेक्षायामपि वाक्यार्थबोधवेलायां तदभावात्। अस्य च तद्वैकवाक्यतेति भावः। स वा बाधको भवतीति भाष्ये स बाधको वा भवतीत्यन्वयः। सिद्धमनुबन्धस्याऽनेकान्तत्वादिति। ननु यद्यनुबन्धो नाऽवयवस्तदा कथं 'क' प्रत्यये कस्येत्त्वम्प्रत्य-यादित्वाऽभावात्। कथं वा 'डा' दीनामनेकाल्त्वेन सर्वादेश-त्वम्। न चाऽऽदेशप्रवृत्तिकालेऽनुबन्धत्वाऽभावादनेकाल्त्वम् तर्हि 'के' अपि वाक्यार्थबोधात्पूर्वं प्रत्ययत्वाऽज्ञानेन तदुत्त-रमेवेत्संज्ञाप्रवृत्तौ सर्वत्र 'नाज्झलौ' इतिसूत्रभाष्योक्तरीत्या उपदेशोत्तरकालमेवेत्संज्ञाप्रवृत्त्या चोपदेशेऽनुबन्धसत्त्वादसा-रूप्यकरत्वं स्यादिति चेन्न 'चुटू' इत्यादावादिशब्दस्य 'समीप' परत्वान्न दोषः। 'अनेकाल्' इत्यत्र संबन्धसामान्य-षष्ठ्यर्थे बहुव्रीह्यङ्गीकारान्न दोषः। 'डा' देशेऽपि 'डा आ' इत्याकारप्रश्लेषात्सर्वादेशत्वम्। इत एव वा स्वरसाद्ध 'अथैका-न्तेषु दोष एव' इति वक्ष्यति भाष्य कृत्। अथ वा प्रयोगे इति क्विपि रूपाऽभावादेव स प्रयोगेऽसरूपः। 'असरूप' पदेन च समानरूपाऽभाववानुच्यत इति भावः। न लादेशेषु वाऽसरूप इति आदेशगतमसारूप्यं गृहीत्वा लकारविषये वाऽसरूपविधिर्नास्तीति तात्पर्यम्। आदेशप्रवृत्त्युत्तरकालि-

कवैरूप्यवत्सु लकारेष्वित्यन्तरार्थः। तदाह लकाराणामसमावेश इति। सर्वेष्टा ❀ संग्रहमुपपादयति क्विवादय इति। 'असरूप' पदेन भिन्नरूपस्यैव ग्रहणमित्याशयः। भाष्ये नाऽनुवन्धकृतमिति भाव्यनुवन्धत्वज्ञानविषयवर्णकृतमसारूप्यं नेत्यर्थः। ददातिदधात्योर्विभाषा शः। पक्षे ण। डादौ तु प्रश्लेषान्निर्वाहः। 'चुटू' इत्यादावादिशब्दस्य समीपपरत्वे चुञ्चुप्चणपो × र्यादित्वेऽपीत्वापत्तेः। अथ वेति उभयकृताऽसारूप्ये गृह्यमाणे व्यावर्त्याऽभावादसरूप इति व्यर्थ, स्पष्टत्वायाऽपवाद इत्येव वदेत्। तत्सामर्थ्यादनुवन्धकृताऽसारूप्यं नाऽऽश्रीयते, किन्तु रूपाऽन्यत्वेनैवेत्यर्थः। तत्सामर्थ्यात्प्रकर्षगतिः। तेन प्रयोगे उपदेशे चाऽसरूप इति द्वितीयः पक्षः। तत्सामर्थ्यात्प्रायोगिकमसारूप्यमिति तृतीयः पक्षः। तत्राऽन्त्ययोः क्विवादिसंग्रहः कथमिति चेद्ध रूपाऽभावादेव सारूप्याऽभावस्याऽऽन्ततेः। 'असरूप' पदेन च सारूप्याऽभाववानुच्यत इत्याहुः। प्रागिति अत्र पक्षे सूत्रे सन्धिः सौत्रः। यद्वा परिभाषापक्षे प्रथमः पक्षः। अधिकारत्वे द्वितीयस्तदा 'स्त्रियाम्' इति दृष्ट्वा निवर्त्तत इत्यर्थः। 'समानकर्तृकेषु तुमुन् लिङ् च' इति वचनाल्लिङ इष्टत्वादाह लिङ् चेति। लोडापादन एव भाष्यतात्पर्यमिति भावः। नियमादिति नियमो वा कल्प्यो ज्ञापकं वा कल्प्यमिति तु भाष्याशयः। किञ्च, लिङ् कर्तृकर्मणोश्चरितार्थः, भावे तुमुन् भावार्थयोस्तयोरपवाद एवेतीष्टं भगवत इति ज्ञायते' इति लिङ्भवत्येवेत्यपि कैयटश्चिन्त्यः। ननु लिङ्लोटौ कामप्रवेदने विधीयेते 'इच्छामि भुञ्जीय' 'इच्छामि भुङ्क्ताम्भवान्' इति हि तदुदाहरणम्। इदं त्वकाम-

❀ उभयत्र पुस्तकेऽयमेव पाठः।

× चणयोरिति 'खं' पठति।

प्रवेदनेऽपीति कथमनयोर्बाध्यबाधकभावः । न चेदमपि काम-प्रवेदनविषयमिच्छति भोक्तुमित्युदाहरणाऽसङ्गतेः, वक्त्रभिप्रा-याऽऽविष्करणमेव हि 'कामप्रवेदन' शब्देनोच्यत इति चेन्न 'तव भोजनमिच्छति' इति तदर्थेनाऽत्राऽपि तत्सम्भवात् । ननु पौर्व-काल्याऽप्रतीतेः कथं क्त्वाविषये लकारप्राप्तिरत आह भोजनार्थ-त्वादिति । क्रियाः प्रागित्यत्र पक्षे दूषणान्तरमाह भाष्ये कालादिष्विति, 'अर्हे तृच्' इति च ॥ ९४ ॥

---

## तव्यत्तव्यानीयरः ( ।३।१।९६ । )

कैश्चिदिति वृत्तिकारैरित्यर्थः । कर्मणि प्रदर्शित इति पक्तव्या इति विवरणात्, न हि तव्यः कर्मकर्तरि, 'ल' वाच्यः कर्त्ता कर्मवद, इति वचनादिति भावः । ननु बोधे विशेषात्कथं तद्धितेन सिद्धिरत आह नित्यानामिति । वास्तुभवत्वेनापि वासकर्तु-रेव रूढ्या बोधान्नार्थविशेषः, रूढ्या सर्वदोषपरिहारादिति भावः । उपादायापि ये हेया इति उपायशब्दव्युत्पत्तिः पृषोदरादि-त्वात्साधुः रेखागवयस्थानीयत्वादिति भावः । कृत्योकेति,-ययतोरिति चान्तोदात्तविधायके नञ् इति च तत्र वर्त्तते । अन्नेन वास्तव्योऽन्नवास्तव्य इत्यादिसमासस्तु अनभिधानान्न भवतीति भाष्याशयः ॥ ९६ ॥

---

## अचो यत् ( ३।१।९७ । )

भाष्ये आर्धधातुकसामान्य इति विषयसप्तम्यामपि पर-भूतविषयसत्त्वे एव प्रवृत्त्या परनिमित्तत्वमस्त्येवेति 'कथयति' इत्यादौ स्थानिवत्त्वनिर्वाहः । आर्धधातुके इति च जाति-निर्देश इति भावः, 'यतोऽनाव' इत्याद्युदात्तस्वरार्थमित्यर्थः ।

यत्प्रत्यय इति एतेन 'दण्डादिभ्यो य' इति वृत्तिपाठ एतद्भाष्यविरुद्ध इति भावः। लक्षणाऽभावादिति 'सुप्सुपा' इति तु न सार्वत्रिकमित्यर्थः। कृदुत्तरपदेति 'वध्य' शब्दो हि 'यतोऽनाव' इति द्व्यच्कत्वादाद्युदात्तः। भाष्ये यदि पुनरिति असिवध्यादयः समस्ता अपि गणे पाठ्याः। आकृतिगणो वा स इति भावः। एतेन 'न चाऽसिवधेत्यादि' अपास्तम्। एवञ्च तद्धितेनाऽसिद्धिरिति वार्तिकं कार्यमेवेति भावः॥ ९७॥

---

## अजर्यं सङ्गतम् (३।१।१०५।)

कर्तरि च सङ्गत इष्यत इति कर्तर्यर्थे सङ्गते विशेष्ये इष्यत इत्यर्थः। कर्तर्ययमिति अत एव 'अजर्यम्' इति निपातनाश्रयणम्। द्व्यङ्गेति कर्त्रर्थत्वसङ्गतविशेष्यकत्वरूपेत्यर्थः। गत्यर्थानामिति भाष्यं दृष्ट्वा 'सङ्गतम्' इति कर्तरि क्तः। तदर्थे च निपात्यमानमजर्यं कर्तरीति प्रतीयते तदसङ्गतम्, सङ्गतमिति मैत्रीपर्यायस्य भावक्तान्तस्यैवाऽत्र ग्रहात्। अतस्तत्तात्पर्यमाह तथापीति। तेन योगादिति भाष्यस्य तेन साहचर्यादित्यर्थः। सोपसर्गस्येति अर्थान्तरवृत्त्येति भावः। ननु कालादिकर्मसत्त्वाऽ❀त्कथमकर्मकत्वन्तत्राह द्रव्येति। एतच्च 'गतिबुद्धि' इति सूत्रे 'कालाध्वनोः' इति सूत्रे च निरूपितम्। कर्त्तरीति वार्तिकारम्भवाद्याह भाष्ये भावे तर्हीति। गत्यर्थेभ्यो विशिष्य विधानेन भावेऽपि 'क्त'दर्शनादिति भावः। प्रत्याख्यानवाद्याह सङ्गतग्रहणमिति। तथा च तत्सामर्थ्यात्कर्त्तर्येव भविष्यति नाऽर्थो वार्तिकेनेत्यर्थः। वार्तिकारम्भवाद्याह कर्तृविशेषणमिति। कर्त्तृपदाऽध्याहारेणेति भावः। तद्व्याचष्टे वैयधिकरण्यमिति।

---

❀ 'सम्भवाद्' इति क्वचित्पाठः।

'अजर्यं सङ्गतेन' इत्युदाहरणमिति भावः । एवञ्च तत्सामर्थ्याऽभावे प्रत्ययव्यावृत्त्यर्थं कर्त्तरीति वाच्यं निपातनसामर्थ्याद्वा कर्त्तरीति भावः । वैयधिकरण्येऽपीडिति कर्त्तरि निष्ठायां सामानाधिकरण्येऽपि तद्विकल्प इति भावः ॥ १०५ ॥

## वदः सुपि क्यप् च (।३।१।१०६।)

यत्राऽधिकारस्येति यथा मण्डूकाऽनुवृत्तिविषये 'धान्यानाम्' इत्यादौ । अवधीति यथाऽलुगधिकारः प्रागानङ इति । सिंहेति तथा 'प्राचां स्फ' इत्यत्र सर्वत्रेति ॥ १०६ ॥

## भुवो भावे (।३।१।१०७।)

प्राथम्यादिति धातुपाठे इति भावः प्रसिद्धत्वाच्चेत्यपि बोध्यम् ॥ १०७ ॥

## हनस्त च (।३।१।१०८।)

भाषायान्त्विति शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वमित्यर्थः ॥ १०८ ॥

## एतिस्तुशास्वृदृजुषः क्यप् (।३।१।१०९।)

आत्मनेपदिभ्यामिति अकारवद्विकरणभ्यामित्यपि बोध्यम् । एतदंशे उत्तरसाहचर्यमप्यनुग्राहकम् । वृणातिरिति वृङ् संभक्तावित्ययम् । एवञ्च क्यब् 'वृञ' एवेति भावः । वस्तुतो व्याख्यानादत्र वृञो ग्रहणमित्येव तत्त्वम् । संहिताया एव नित्यत्वमिति अविच्छिन्नपारम्पर्यत्वमेवात्र नित्यत्वम् । अर्थ निश्चयाऽभाव इति 'आज्य❀'

❀ 'आज' इति कं पठति ।

शब्दस्य रूढत्वादाङर्थोऽस्ति न वेति निश्चयाऽभाव इत्यर्थः। 'समासे संहिता नित्या' इत्यवग्रहस्य साधुत्वाऽभावात्सम्प्रदायमात्रशरणस्य तस्य 'लक्षणाविषयता' इत्यर्थं मन्ये ॥ १०९ ॥

---

## ई च खनः ( ३।१।१११। )

क्यप्सन्नियोगेनेति। ननु अन्तरङ्गे इत्वे कृते एकदेशविकृतन्यायेन प्राप्ताऽऽत्ववारणार्थं तदावश्यकम्। इत्वन्तु पक्षे चरितार्थम्। किञ्च, 'अचः कर्त्तृयकि' इति सूत्रे भाष्ये 'ये विभाषा' इत्यत्र 'ये' इत्यस्य विषयसप्तम्यन्तताया उक्ततया परत्वेन क्यपः पूर्वमेवात्वे ततः परत्वात्सवर्णदीर्घे एकदेशविकृतन्यायेन 'इ च खन ❁' इत्यस्य प्रवृत्तौ 'खियम्' इति स्यात्तद्वारणार्थं दीर्घनिर्देश इति केषाञ्चिदाशय इति चिन्त्यमेतदिति केचित्। भाष्याशयस्तु व्यवस्थितविभाषयाऽत्राऽऽत्वाऽप्रवृत्तिरिति। इदञ्च तवाऽप्यावश्यकम्, अन्यथा आकारस्य दीर्घेकारेऽपि 'खीयम्' इति स्यान्न तु खेयमिति। न च खनेर्नस्या × ऽनुनासिकेकारः स्यात्तस्याद्गुणोऽपि कदाचित्तादृश एव स्यात्तद्वारणाय इकाररूप एवेकार इत्यर्थं दीर्घनिर्देश इति वाच्यं स्थान्यनुरूपेऽनुनासिके एवोच्चारणीयेऽननुनासिकोच्चारणात्। स्पष्टञ्चेदं 'पथि मथि' 'अष्टन आ' इत्यत्र भाष्यकैयटयोरित्याहुः ॥ १११ ॥

---

## भृञोऽसंज्ञायाम् ( ।३।१।११२। )

स्त्रियामप्रतिषेध इति भाष्ये स्त्रीलिङ्गभार्याशब्दविषयेऽनर्थकोऽसंज्ञायामिति प्रतिषेध इत्यर्थः। अस्त्रीशब्दस्य संज्ञाशब्देन

---

❁ 'खन' इति 'के' पाठः 'इ च खन' इति खे।

× 'नकारस्य' इति खं पठति।

समानाऽधिकरणसमासमभिप्रेत्य तत्सिद्धये कर्मणि संज्ञाशब्दं व्युत्पादयति संज्ञायत इति। अस्त्री रूढ्या बोध्या यस्याऽस्तीत्यर्थः। अन्यथेति 'संज्ञायां समज' इति क्यबन्तानां 'समज्या' इत्यादीनां स्त्रीलिङ्गत्वादिति भावः। लौकिकी त्विति। न च विपरीतं क्तिन्न स्यादिति वाच्यं 'स्त्रियां क्तिन्' इत्यत्र शास्त्रीयस्यैव ग्रहेणाऽस्याऽपि तत्रैव प्रवृत्तेरिति भावः। भाष्ये यथान्यासमिति 'संज्ञायां सम' इति सूत्रे यदधिकं न स्त्रियामित्यादि कृतं तन्न कार्यमित्यर्थः। भाव इति तत्र वर्तते इति। ननु 'समज्यानिषद्यानिपत्यानामधिकरणे, 'मन्याविद्ययोः करणे, तेन सिद्धेरङ्गीकारेण कथं 'भावे' इत्यस्यं तत्र संबन्ध इति चेन्न 'भृञ्' विषये भाव इति वर्तते इत्यर्थः। एवञ्च भृञो भाव एवेष्यत इति भावः। एवमग्रे भावाऽधिकारोस्तीत्यपि व्याख्येयम्। संज्ञाशब्द इति संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयते। तत्राऽभिधेये प्रत्ययश्चेत् तर्हि 'भृत्या' शब्देन स्यादेव गृहिण्यभिधानमिति भावः। भावसाधनेन धातूनामनेकार्थत्वाद्रूढिरुच्यते तदाह रूढिरिति। तद्विषयोऽर्थ इत्यर्थः। तेन रूढ्यर्थो गम्यत इत्यर्थः। नामधेयवाची संज्ञाशब्दस्तु करणव्युत्पन्न इति बोध्यम्। अपर आहेति भाष्ये। सिद्धन्तु स्त्रियां संज्ञाप्रतिषेधादित्याद्यकरणेन पक्षान्तरत्वम्। कर्मणि क्यबभावादिति भृञ इति शेषः। 'जन्ये*' स्वरार्थं 'यत्' एव इष्यते स बाहुलकादेव सिद्ध इति 'पतिजनेरित्युक्तमुपसंख्यानं न कार्यम्' इति बोध्यम्। भाष्ये सम्भार्या एव सम्भारा इति सम्भरा इति पाठे 'भृ' इति दीर्घान्तात् ऋयादेः 'ॠदोरप्' इति बोध्यम्॥ ११२॥

---

* 'जनेः' इति क्वं पठति।

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ( ३।१।११४। )

सृसर्तिभ्यामिति भाष्यस्य क्यब्निपात्यत इति शेषः। कुप्यम् गुपेरादेः कत्वम्। सुवर्णरजतभिन्नं धनं कुप्यम्❀ ॥ ११४ ॥

---

## प्रत्यपिभ्यां ग्रहेः ( ३।१।११८ )

'अपिगृह्य' शब्देन बलात्कारग्राह्यमुच्यत इति केचित् ॥ ११८ ॥

---

## अमावस्यदन्यतरस्याम् ( ।३।१।१२२। )

यत्प्रत्यय इति सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थः। अन्तस्वरितमिति 'अमा' इति लुप्तसप्तमीकम्' इत्युपपदत्वान्निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणेति भावः। यत्प्रत्ययेति निरस्ताऽवयवविभागः समुदाय एव नियात्यते। तस्य च 'तकारो'ऽन्त इति अन्तस्वरितत्वं सिध्यतीति भावः। 'अमावास्या' शब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनाऽस्य ग्रहणमपि सिद्धमिति तात्पर्यम्। भाष्ये ञ्नितीत्याद्युदात्तत्वं न प्राप्नोतीति ञ्नितीति परसप्तमीत्यभिप्रायेणेदम्। प्रकृते स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम्। तत्सूत्रे प्रत्ययग्रहणस्य प्रत्या-

---

❀ कौटिल्येन भगवता चाणक्येनेदं 'कुप्यम्' अर्थशास्त्रे कुप्याध्यक्षप्रकरणे दारुवेणुवल्लीवल्करज्जुभाण्डपुष्पौषधचर्मपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छलोहभाण्डकाष्ठतृणवाटैरेकोनविंशतिवर्गैर्वर्गीकृत्य प्रदर्शितम्। अतः सर्वाण्यपीमानि कुप्यपदेनाऽभिधीयन्ते। तत एव द्रष्टव्यः कुप्यवर्गः। सं०

ख्यास्यमानत्वात्तद्रीत्येदम्भाष्यमित्यन्ये। एकतरस्येतीति वस-धातुभ्यां ण्यतोः कृतयोरन्यतरस्येत्यर्थः, 'वसोः' इति पञ्चम्यर्थे षष्ठीद्विवचनम्। 'ग्रयद्व' अप्यमाशब्दे उपपदे निपात्यत इति बोध्यम्। अन्यथोपपदत्वाऽभावे समास, उत्तरपदप्रकृति-स्वरश्च न स्यादिति बोध्यम्। वार्तिके 'अवृद्धिता' शब्देन ह्रस्वो लक्ष्यते तद्ध्वनयन्नाह एकदेशीति। भाष्ये स्वरश्च मे इति 'तित्' प्रत्ययप्रयुक्तः स्वरित इत्यर्थः॥ १२२॥

---

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याऽध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि (।३।१।१२३।)

कृतेराद्यन्तविपर्ययः कृताद्यर्थ इत्यसङ्गतं मत्वाऽऽह कृत शब्दस्येति। तत्प्रयोजन इति अस्याऽन्तस्थाने तदुत्पत्तिप्रयो-जनस्तत्स्थानेऽन्तोत्पत्तिप्रयोजनश्चेत्यर्थः। तद्ध्वनयन्नाह परस्प-रेति। अन्यथाऽऽद्यन्तयोः स्थाने तृतीयवर्णकरणमप्याद्यन्तवि-पर्ययः❀ स्यादिति भावः। 'निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छ-न्दसि कृताद्यर्थ' इत्येव भाष्यपाठ इति कैयटतात्पर्यम्। साम्प्र-तिक× पुस्तकेषु तु 'निष्टर्क्यं कृतेराद्यन्तविपर्ययश्छन्दसि कृता-द्यर्थः, यथा कृतेस्तर्क इत्यादि दृश्यते। तत्र निष्टर्क्यं कृतेश्छन्दसि इत्यन्वयः। निपात्यते इति शेषः प्रत्ययप्रकरणात् ण्यन्निपात्यः षत्वश्च निपात्यमित्यर्थः। अन्यथा ऋदुपधत्वात्क्यबेव स्यादिति भावः। आद्यन्तविपर्ययः कृताद्यर्थ इत्यस्य कृताद्यर्थ आद्यन्तविपर्यय आवश्यकस्तेनाऽत्राऽपि सिद्धे तदर्थं न निपातनमित्यर्थः। 'कृता

---

❀ 'साम्प्रत' इति कं पठति।

× 'विपर्ययात्' इति कं पठति।

र्थ' इत्यादिशब्दार्थमेव दर्शयति कृते स्तर्क इत्यादिना। अपर आह निष्टक्यें व्यत्ययमिति वर्णव्यत्ययं प्रत्ययव्यत्ययञ्चेत्यर्थः 'व्यत्ययो बहुलम्' इति सूत्रेणेति भावः। एवञ्च षत्वमात्र फलकं निपातनमित्याह निसः षत्वमिति। भाष्ये एयद्विधिश्चतुरिति सुजन्तमेतत्। चतुरो वारानित्यर्थः। चतुर्भ्य इति यावत्। उपपूर्वाच्चिनोतेरिति। पृडे उत्तरपदे इति यावत्। पृडेरिगुपधलक्षणः कः॥ १२३॥

## ऋहलोर्ण्यत् (।३।१।१२४।)

पाणौसृजेः ऋदुपधादिति क्यपोऽपवादो ण्यत् लपिदभिभ्यां पोरदुपधादिति॥ १२४॥

## ओरावश्यके (।३।१।१२५।)

ननु उक्तार्थत्वादवश्यशब्दप्रयोग एव न स्यात् ण्यदेव वा स्यादिति कुतो नोक्तमत आह द्वावपूपाविति। 'द्योत्य' इत्युक्तेर्द्योतकसमुच्चय इष्ट एवेति लभ्यते। उपपदत्वाभावात्स्वरसमासयोरनुपपत्तिरिति भावः। ननु 'विस्पष्टादीनि गुणवचनेषु' इत्यनेन पूर्वपदप्रकृतिस्वरविधानादत्र चोत्तरपदप्रकृतिस्वरस्येष्टत्वेन 'विस्पष्टादिवद्' इत्यसङ्गतमिति मत्वाऽऽह यथेति। एवञ्च मयूरव्यंसकादिषु निपातनादेव सिद्धे 'विस्पष्टादीनि' इति सूत्रमपि न कार्यमिति भावः॥ १२५॥

## आनाय्योऽनित्ये (।३।१।१२७।)

सम्भावने लिङिति दक्षिणाग्नौ युक्तत्वं सम्भाव्यते निपातनादित्यर्थः॥ १२७॥

# संस्कृतगवेषणा ।

—:०:※:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सविधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अवका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंवन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तस्तर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

वालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

## उद्योतनियमः ।

—:*:०:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निःसरिष्यति । भविष्यति मुद्राषट्कं वार्षिकं मूल्यमस्य मुद्रणकर्मणि परिसमाप्ते । ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्धचतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति । अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति ।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस ।)

श्रीमते वायुपुत्राय नमः ।

# भाष्यप्रदीपोद्योतः ।

## महामहोपाध्यायनागेशभट्टविरचितः



द्विवेदोपाह्वेन

बालगोविन्दशास्त्रिणा वैद्येन

संशोधितः

प्रकाशितश्च ।

गोपालचन्द्र चक्रवर्ती द्वारा भारतधर्म प्रेस, काशीमें मुद्रित ।

# अभ्यर्थना।

—**०**—

महोदयाः

अस्ति खलु विदितमेतद्यदधुना वाराणसेयानां विदुषां वैदुष्यम्प्रायः पाणिनिव्याकरणमधिष्ठायैव परिष्कारबलेन सर्वोपरि वरीवर्त्ति। व्याकरणञ्च तन्महर्षिभगवत्पतञ्जलि प्रणीतमहाभाष्यमन्तरेणाऽकिञ्चित्करम्। तच्च महाभाष्यमत्यर्थ गूढाऽभिप्रायमित्यालोच्य कैयटेन तदर्थबोधनाय प्रदीपो व्यधायि। ततः कालक्रमात् जनानां बुद्धिवैपुल्याऽभावात् परमकारुणिकेन महामहोपाध्यायनागेशभट्टेनोभयार्थद्योतकोद्योतो व्यधायि। किन्तु, अयमुद्योतोऽद्यावधि आपादचूडं न क्वापि मुद्रित इति महान् खेदः। केवलमादितोऽध्यायद्वयमुद्द्योतस्य 'बम्बई' नगरे मुद्रितम्। तृतीयाऽध्यायादारभ्याऽऽसमाप्ति मुद्रयितुमहं बद्धपरिकरः केवलं धार्ष्ट्यादेव सञ्जातोऽस्मि। तत्रभवतो नागेशभट्टविदुषः पुण्यप्रभाव एव मां तारयिष्यतीति मदीयो दृढविश्वासः।

आदर्शपुस्तकञ्चैकमेव 'कश्चिदाय' विक्रमवत्सरलिखित मस्ति। एकमपरम्पुस्तकमद्याभ्यर्थनालेखकाले 'टीकमणि कालेज' संस्कृतपाठशालाया व्याकरणप्रधानाध्यापकेन श्रीमद्विद्वद्वरपूर्णचन्द्राचारिणा श्रीविद्वद्वरानन्तरामशास्त्रिणः सकाशादवाप्य प्रदत्तमिति, उभयोरपि विदुषोराजन्माहं ऋणी भविष्यामि। प्राप्तस्यास्य 'ख' संज्ञा भविष्यति। उद्योतस्यास्य सभाष्यस्य 'क' संज्ञकं पुस्तकं श्रीमद्विद्वद्वररामचन्द्रशर्मणा मम पित्रा संगृहीतन्तत्तु मदीयमेव। एताभ्यां मुद्रितेऽस्मिन्मुद्योते यदि क्वापि स्खलनं स्यात्तर्हि विद्वद्भिः क्षन्तव्यमिति विदुषां वशंवदः।

बालगोविन्द वैद्यः। मार्गशीर्ष १५।

पाय्य*सान्नाय्यनिकाय्यधाय्या मानहविर्निवास-सामिधेनीषु ( ३।१।१२९। )

भाष्ये पाय्यनिकाय्ययोरिति आयादेशोऽपि निपात्यत इति बोध्यम् ॥ १२९ ॥

---

क्रतौ कुण्डपाय्यसञ्चाय्यौ ( ३।१।१३०। )

यद्विधेय इति तेन 'यतोऽनाव' इत्याद्युदात्तः, कृदुत्तरपदप्रकृतिस्वरेण तत्सत्ता च युक् च निपात्यत इत्यपि बोध्यम् ॥ १३० ॥

---

अग्नौ परिचाय्योपचाय्यसमूह्याः ( ३।१।१३१। )

भाष्ये वहेर्ण्यदिति समूह्यशब्दे इति शेषः। तत्र कृते सम्प्रसारणदीर्घत्वे निपातनादित्यर्थः। वहिसमानार्थेनेति संवाह्यमित्यग्नौ तु न अनभिधानादिति भावः। ऊहिविग्रहादिति ब्राह्मणे ऊहिना विग्रहदर्शनादूहेर्वह्यर्थत्वं सिद्धमित्यर्थः ॥ १३१ ॥

---

ण्वुल्तृचौ ( ३।१।१३३। )

भाष्ये यदि 'तृ' इत्युच्यते मातरौ मातरः अत्रापि प्राप्नोतीति। न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति वाच्यम् तदयाऽनुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इह प्रवृत्तेरिति भावः। तृप्रत्ययान्ता इति निरनुबन्धकतृप्रत्ययान्ता इत्यर्थः। अस्यापि तृच्त्वे यथान्यासेऽप्यापत्तेः सत्वेन 'तृ' इत्युच्यमाने इत्यस्याऽसङ्गत्यापत्तेः। भाष्ये तृ इति वदया-

* 'पाय्यम्' 'वटखरा' इति लोके 'पैया' वा।

मीति । एवञ्च तृनो ग्रहणसिध्द्यर्थं चकार इति भावः । यदि तृ इत्युच्यते इति चकारकरणसामर्थ्यात्सानुबन्धकग्रहणे निरनुबन्धकग्रहणं दुर्वारमेवेति भावः । अन्यत्राऽपि तदर्थत्वं दर्शयति इति बोभयोर्ग्रहणमिति इदमुणादयो व्युत्पन्ना इति शाकटायनादिमते । अव्युत्पत्तिवादिमते तु प्राप्तिरेव न । मातयतीत्यादौ 'तृ' लोपवारणायाऽत्राऽव्युत्पत्तिपक्ष एवाऽवश्यक इति 'अचि र ऋत' इति सूत्रे कैयटः । किं कारणमिति कस्माद्धेतोरित्यर्थः । हेतुमाह धातुमात्रादित्यादिना । अन्येषामिति ण्वुल्तृज्व्यतिरिक्तानामित्यर्थः । एवञ्च 'वर्त्तमान' इति कृदन्ते दोषः । ण्वुल्तृचोस्तु अन्यत्र कालेऽनभिधानं स्वीकार्यमिति भावः ॥ १३३ ॥

---

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ( ३।१।१३४। )

भवः सब इति भाष्ये पाठः ॥ १३४ ॥

## पाघ्राध्माधेट्दृशः शः ( ३।१।१३७। )

केचिदिति भाष्ये । 'जिघ्रः संज्ञायाम्' इत्यादेशेऽकार उच्चारणार्थ इति जिघ्र इति पञ्चमीति भावः । केचिज् 'जिघ्र भावस्य' इति वार्तिके 'जिघ्र' इति षष्ठ्यन्तं मन्यन्ते । केन शे आकारलोप इति 'आतो लोप' इत्यत्रार्धधातुक इत्यधिकारादिति भावः । 'श्नाऽभ्यस्तयोः' इत्यस्य प्राप्तिरेव न ॥१३७॥

---

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ( ३।१।१३८। )

अरविन्दः अर्द्धर्चादिः ॥ १३८ ॥

## प्रुस्त्ल्वः समभिहारे वुन् ( ३।१।१४९ )

साधुकारिणीति समभिहारग्रहणस्थाने इदं कार्यमित्यर्थः ॥ १४९ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

॥ पादश्चायं समाप्तः ॥

---

## द्वितीयः पादः ॥ २ ॥

### कर्मण्यण् ( ३।२।१ )

यस्य सती परिणामिनी प्रकृतिर्नाऽऽश्रीयते यस्य चाऽविद्यमाना तन्निर्वर्त्यमित्युच्यत इत्यर्थः। तदेवाऽऽह यस्येति। कार्यसामानाधिकरण्येन प्रतीयमानं नास्तीत्यर्थः, यथा मृदं घटं करोतीति। विवक्ष्यत इति कार्यादभेदेनेत्यर्थः ❀। तदा विकार्यं कर्मेति। अवस्थाद्वयाऽनुगमेन पूर्वाऽऽकारपरित्यागेनाऽऽकारान्तरप्राप्त्यवगमादिति भावः। भेदविवक्षायामिति कर्मणः सकाशादुपादानस्य भेदविवक्षायामित्यर्थः। मृदा घटमिति करणत्वविवक्षायां तृतीया। नो चेत्सम्बन्धसामान्यविवक्षायां 'मृदो घटम्' इति षष्ठीति बोध्यम्। विकार्यमपीति पूर्वरूपस्य सर्वात्मना परित्यागतदभावाभ्यामित्यर्थः। दर्शनादिति प्रत्यक्षादित्यर्थः। निर्वर्त्ये 'स्वरूपलाभ' एव क्रियाकृतो विशेषो, विकार्ये 'विकाररूप' एव सः। घटं करोति, स्वर्णं कुण्डलं करोति, काष्ठं भस्म करोति। अनुमानाद्यथा पुत्रः सुखं करोतीति। अत्र सुखस्वरूप

---

❀ 'कार्याभेदेनेति शेष' इति क्वे पाठः।

लाभो मुखप्रसादाऽनुमेयः। नित्यः तत्तत्कल्पेऽविच्छिन्नपारम्पर्य इत्यर्थः। ननु 'वेदाऽध्यायादीनाम्' इत्यादिनैव सर्वसंग्रहे सिद्धे 'यत्र च नियुक्त' इत्यादेर्वैयर्थ्यमत आह वेदाऽध्यायादीनामिति। वस्तुतः प्रपञ्चार्थमेव तानीति बोध्यम्। शास्त्रेणाऽपि 'कर्मण्यण्' इति सामान्यशास्त्रेणापि। ननु सर्वधातुभ्योऽज्विधानेन 'कुम्भकार' इति कथमणोऽवकाश इत्यत आह यदेति। सर्वधातुविषयश्चाऽच्प्रत्यय आवश्यक इत्याह तथा चेति। उदाहरणान्तराणि काऽण्विषयाणि। काऽणाविति इगुपधेति कः, कर्मण्यण्। भाष्ये अर्थज्ञः कर्मोपपद इति विप्रतिषेधेन प्राप्तमणं बाधित्वा 'आतोऽनुपसर्ग' इति 'क' इति तात्पर्यम्। एतत्तात्पर्यमजानान एकदेश्याह नैष युक्त इति। 'ज्ञ' विषये काऽणोर्य इत्यर्थः। तेषां ण इति 'श्याद्व्यधा' इति विहितः। तत्र हि 'श्या आद्' इति च्छेदः। स यथैवेति बाध्यसामान्यचिन्तयाऽणोऽपि स बाधक इत्यर्थः सिद्धो विप्रतिषेधं विनाऽपीत्यर्थः। तदाह प्राप्तिमात्रस्येति। न तु कर्मोपपदस्येति। एवञ्च विप्रतिषेधो युक्त एवेति भावः। ननु 'अर्थज्ञ' इत्यत्राऽणं विधातुं न 'क' प्रत्ययेन विप्रतिषेध उच्यते किन्तु 'आतोऽनुपसर्गे क' इति 'कं' विधातुम्। एवञ्च 'इगुपध' इति कस्याऽणा बाधेऽप्यातोऽनुपसर्ग इति केन तृतीयकक्ष्याप्राप्तस्येगुपधेति कस्य विप्रतिषेधः सम्भवत्येवेत्याह सिद्धान्ती। एकदेशी कर्मोपपदोऽपीति। अणः क इति 'आतोऽनुपसर्ग' इत्ययमिति भावः। उभयोरिति सोपपदनिरुपपदयोः कयोरित्यर्थः। कर्मोपपदस्य कस्य विषय इति अनाऽऽकारान्तत्वादिति भावः। किन्तु 'गोद' इत्यवकाश इति वक्तुं 'युक्तमिति तात्पर्यम्। क्रममादृत्येति। 'अर्थज्ञः' कर्मोपपदो भवति विप्रतिषेधेनेत्युत्तरम्। नैष

युक्त इत्यादि 'युक्तो विप्रतिषेध' इत्यन्तम्भाष्यन्त्वेकदेशयुक्ति-रित्युक्तमेव। अथ विप्रतिषेधस्योदाहरणान्तरमाह अनुपपद-स्येत्यादिना। भाष्ये का तर्हि गतिरिति तृतीयस्य प्रश्नः। समासे पूर्वपदप्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान्दर्शयति मांसेति। एकस्मिन्ननन्ते लघौ द्वयोर्वाऽन्तयोर्लघ्वोः सतोर्बह्वपः बह्वच्कस्येत्यर्थः। भाष्ये ईकारश्च माभूदिति आतो 'णः' कृत इति भावः। मांसं तस्य भक्ष इति भक्षेः कर्मण्यच्। 'घञजपाः पुंसि' इति नित्यं पुंस्त्वम्। एतेन 'इदं भावघञ्वि-षयमेव' इत्यपास्तम्। भक्षणं भक्ष इति भावेऽजिति भावः। कर्माऽजन्तेन समानाधिकरणबहुव्रीहिस्तु नाऽनभिधानात्। तच्च तवाऽप्यावश्यकमिति बोध्यम्। भाष्ये तज्ज्ञापयत्याचार्य इति। ननु 'अणि सति मांसभक्षी' इति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिकं कथं ज्ञापकमिति चेदनभिधाना-दणभावं मन्यते। लावयतेरच्प्रत्यय इति निवृत्तप्रेषण-प्रकृतिकप्राकृतार्थणिजन्तादच्प्रत्यय इत्यर्थः। अन्यथा 'काण्डानि लुनाति' इत्यनेन समानार्थत्वं न स्यात्। 'काण्डानि लाव' इत्यत्र 'लाव' इति जातावेकवचनं बोध्यम्। अण्बाधनार्थ मेवेति। अनभिधानेन प्रत्याख्यानन्तु न चमत्कारीति भावः। भाष्ये न त्वम्भोऽभिगमेति अम्भोऽभिगमात्तु नेष्यते। तस्मा-दनभिधानमेव तदर्थमाश्रयणीयम्, नत्वेकप्रयोजनार्थं सामा-न्यज्ञापकाश्रयणमिति भावः। लूयत इति लव इति। न च निवृत्तप्रेरणादिति प्रागुक्तरीत्या तदर्थो लावशब्दोऽप्यस्तीति वाच्यं, सा हि कल्पना क्वचिदिष्टप्रयोगसिद्धये न त्वनिष्टायेति भावः। चतुर्थ्यन्तप्रयोग एव व्यत्ययोक्तेस्तत्राऽविशेषोऽणचोरत आह अवग्रह इति। 'न लक्षणेन पदकारा अनुवर्त्याः' इत्यादि

भाष्येणाऽवग्रहार्थताया लक्षणस्य दूषितत्वादिदं व्यर्थमित्यनेन सूचितम् ॥ १ ॥

---

## आतोऽनुपसर्गे कः ( ३।२।३। )

प्रसारणिनः प्रसारणभाजः। ब्रह्मज्य ❀ इति। 'के' हि सम्प्रसारणे 'इयङ्' स्यादिति भावः। भाष्ये किमुच्यते सर्वत्रेति सर्वत्रेत्यस्य 'क' मात्रे इत्यर्थः। तमाह अन्यत्राऽपीति 'आतश्चोपसर्गे' इत्यत्राऽपीत्यर्थः। एवन्तर्हि वार्णादिति 'इयाय' इत्यादिसिद्धयेऽस्या भिन्ननिमित्तकेऽपि प्रवृत्तिरावश्यकीति भावः। समानाश्रयेति तदनाश्रयणेऽप्याह इति वक्तुमुचितम्। एवञ्च 'एवन्तर्हि' इति किञ्चेत्यर्थकमिति भावः। भाष्ये अन्तरङ्गं पूर्वत्वमिति यद्यपि 'वार्ण' परिभाषयाऽपि आल्लोपस्य नित्यत्वं वक्तुं शक्यन्तथापि तदनाश्रयेणैवास्य ग्रन्थस्य प्रवृत्तेर्न दोषः। प्रकारान्तरेण तदुपपादयितुमाह यस्येति न त्वनादिष्टादच इति। अत एव 'न पदान्त' सूत्रस्थसवर्णग्रहणं भगवता प्रत्याख्यातम्। 'न धातु' सूत्रस्थं भाष्यन्तु तत्रैव योजितमिति न तद्विरोध इति बोध्यम्। समाधानान्तरस्य सम्भवादनित्यमिदं नाऽऽश्रितमिति तत्त्वम्। 'हु' धातुना सिद्धमिदं रूपमत आह ह्वे ञ इति। 'वार्णादाङ्गं वलीय' इति पूर्वरूपं वाधित्वा लोप इति पक्षेऽप्यस्याऽसिद्धिर्वोध्या।

---

❀ब्रह्मज्यो यज्ञसमापको यज्वा इत्यर्थः। अत्र ब्रह्मपदं यज्ञवचनम्। जिनातिश्चावस्थान्तरप्राप्तौ। अस्मिन्नेवार्थे अमुं शब्दं स्वश्रौतसूत्रे पञ्चदशप्रश्ने प्रथमकाण्डे चतुर्थेऽध्याये 'स आह ब्राह्मणाश्च राजानश्चानेन माऽश्वेन मेध्येन स्वस्ति समापयाता ब्रह्मज्यताया इति।' तं तथेतरे प्रत्याहुरनेन त्वामश्वेन मेध्येन स्वस्ति समापयिष्यामो ब्रह्मज्यताया इति। अथ ब्रह्मज्यतामस्मै सञ्जानते' इति महर्षिर्वौधायनः प्रयुक्तवान्। अतो ब्रह्मज्यशब्दार्थ स्तत्रैव द्रष्टव्यः।

भाष्येऽन्तरङ्गत्वादात्त्वमिति । एवञ्चाऽऽत्वे पूर्वरूपलोपयोः प्राप्तयोर्वार्णादिति न्यायेन लोपे तस्य स्थानिवत्त्वादुवङ्स्यादिति भावः । एवन्तर्हीति प्राग्वदेव किश्चेत्यर्थः ❀ । प्रसज्यप्रतिषेधे त्विति । 'वचिस्वपि' इत्यत्र 'किति' इत्यपि यदि विषयसप्तमी तदा भाष्यं सम्यगेव । भाष्ये आत्त्वे कृते सम्प्रसारणमिति आत्त्वे कृते लोपे कृते सम्प्रसारणे कृते प्राप्तोवङि स्थानिवत्त्वाऽभावेऽप्यसिद्धत्वादुवङोऽसिद्धिरिति भावः । समाधत्ते एवन्तर्हीति । योगविभागसामर्थ्यादन्तरङ्गमप्यात्त्वं बाधित्वा पूर्वं सम्प्रसारणं पूर्वत्वञ्चेत्युवङ् सिद्धो 'जुहुवुः' इत्यादाविति भावः । पर्युदासाश्रयेपीति अन्यथाऽन्योन्याश्रयः स्यादिति भावः । आभीयाऽसिद्धाऽनित्यत्वेनाऽपि 'जुहुवतुः' इति सिध्यति । ह्वः 'के' कृते आल्लोपात्पूर्वं सम्प्रसारणं, यतो नित्यम् । नित्यत्वं दर्शयति कृतेति । एवञ्च ह्वो 'यण्' फलमित्यर्थः । वार्णादित्यादि व्याचष्टे तत्र कृते इति । यतोऽनादिष्टादचः पूर्वत्वे स्थानिवत्त्वमतो भगवान् कात्यः प्रसारणिभ्यो डं प्रोवाचेत्यन्वयः । प्रत्याख्यानवाद्याह तेनाऽसिद्धिर्यणस्तु त इति । तेनाऽऽभादिति सूत्रेण यतोऽसिद्धिरतो 'यण्' अस्त्वित्यर्थः । 'प्रोवाच भगवान् कात्य' इत्युक्त्या 'ड' विधानस्य 'आह्व' सिध्यर्थमावश्यकता ध्वनिता । तथा चेदमेव ज्ञापकमीदृशे विषये आभीयाऽसिद्धत्वाऽभावस्य वार्णादाङ्गमित्येतदभावस्य चेति जुहुवतुरित्यादिसिद्धेर्योगविभागस्य तथाऽपि कर्तव्यत्वेन गौरवस्य तदवस्थत्वादिति च ध्वनितम् । एवञ्च तेनाऽसिद्धिरित्युक्तिरेकदेशिनः प्रौढ्येति च ध्वनितम् ॥ ३ ॥

---

❀ 'किश्चेत्यर्थे' इति ख पाठः ।

## सुपि स्थः ( ३।२।४। )

भाष्ये भावे चेति चात्कर्तरि कच्छेन पिबतीति। अकर्मण्युपपदे प्रत्ययार्थं 'सुपि' इति योगविभाग इति भावः। सत्येवार्थे इति। 'एव' शब्दो वाक्यालङ्कारे। संभवति योग्येऽर्थे ऽसदर्थाश्रयेण व्युत्पादनमयुक्तमित्यर्थः। नित्यसमासेति 'उपपदमतिङ्' इत्यनेनेति भावः। 'घञर्थे कविधानम्' इत्येतदुदाहरणपरे 'स्थास्नापाव्यधिहनियुध्यर्थम्' इत्यत्र 'स्था' ग्रहणन्तु कर्माद्यर्थमिति बोध्यम्। प्रत्यासन्नत्वादिति। अत एवाऽस्य नित्यमेकत्वमेव न तु घञादिवाच्यवद्द्वित्वादियोगोऽपीति भावः। तक्रकौण्डिन्येति 'विधेयविषय' एव स न्यायो नाऽनुवादविषय इत्यन्ये ॥ ४ ॥

---

## तुन्दशोकयोः परिमृजापनुदोः ( ३।२।५। )

तत्र सामर्थ्यादिति। एवं सति ते गम्ये भवत इत्यर्थः। 'तुन्दपरिमृजे' मृजेरचि 'ग्क्ङिति च' इति पक्षे वृद्धिः प्राप्नोति सा भवत्येव सत्यभिधाने। यत्तु 'अचि' इत्येव वक्तव्ये अजादावित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति तन्न तत्र तदभावात्, 'यस्मिन्विधिः' इति परिभाषालभ्य 'आदि' ग्रहणस्यैव तत्राऽनुवादाच्च। अत्रत्यभाष्यस्वरसात्तत्र 'क्ङित्' पदेनातिदेशिकक्ङितोरेव ग्रहणम्। व्याकरणान्तरे 'संक्रम' पदेन तयोरेव ग्रहणाच्चेति परे। 'मूलविभुजादिभ्य' इति तु तादर्थ्ये चतुर्थी। काकगुहा इति काकेभ्यो गूहितव्या इत्यर्थः। 'घञर्थे कविधानम्' इत्यनेनाऽत्रापि सिध्यत्येतत्, सरसि सरस्यां वा रोहति। कौ मोदत इत्यर्थः।

---

## गापोष्टक् ( ३।२।८ )

बहुलं तणीति पक्षे 'आतोऽनुपसर्गे' इति कः । या ब्राह्मणी सुरापेति सुरां पिबतीत्यर्थे एवाऽयं प्रयोग इति बाहुलकाश्रयणम् ॥ ८ ॥

---

## हरतेरनुद्यमनेऽच् ( ३।२।६ )

लिङ्गेति तत्फलन्तु 'देवदत्तसखी' इत्यादौ टजभावः । भाष्ये धार्यर्थे इति । ग्रहणपूर्वकधारणे, लाक्षणिकाद्ग्रहे-रित्यर्थः ॥ ६ ॥

---

## शमिधातोः संज्ञायाम् ( ३।२।१४ )

ककारव्यत्ययेनेति 'नैषा शंकरा' इति भाष्यविरोधाच्चिन्त्यमेतत् । धातुग्रहणं न कर्तव्यमिति 'ट' बाधनार्थं न कर्तव्यमित्यर्थः । 'क्विपो' बाधनार्थन्तु तदावश्यकमिति 'स्थः क च' इति सूत्रे भाष्ये स्पष्टम् ॥ १४ ॥

---

## अधिकरणे शेतेः ( ३।२।१५ )

मयूरव्यंसकेति दिग्धसहपूर्वता प्रायोगिकी ❀ बोध्या, पृथग्'दिग्धसह' शब्दस्य सिध्यभावात् । 'गिरौ शेते' इत्यर्थे तद्धितस्याऽविधानादाह यो गिराविति । अन्ये लाहुरिति । अत्राऽरुचिस्तवदन्तशब्दाऽसिद्धिरव्ययत्वापत्तिः, 'शसः' स्वार्थिकत्वेन 'गिरौ शेते' इति विग्रहाऽसङ्गतिश्च । वैरेति वीरस्येदं वीराया वा वीरादागतं तत्र भवमिति । वसिष्ठस्येदं तेन कृतं

---

❀ प्रायोगिकी नित्या ।

प्रोक्तं वा। गिरौ शेते गिरिं श्यति वा गिरिशः। निमित्त अर्थः, अवधिः प्रत्ययानाम्प्रकृतिः, तत्संकरैरित्यर्थः ॥ १५ ॥

---

चरेष्टः ( ३।२।१६ )

कुरुंश्चरतीति तान् गच्छतीत्यर्थः। यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययाऽनुत्पत्तिप्रतिपादनं व्यर्थं स्यादत आह यश्चेति। भिक्षाचरेति चरतिश्चरणकरणकाऽर्जने लाक्षणिको भिक्षार्थो वा, तत्रैव चाऽयं प्रयोग इष्यते भाष्य प्रामाण्यात्। एतेन 'भिक्षया हेतुना चरति इत्यर्थक 'भिक्षाचर' प्रयोगसाधकेन तत्सूत्रेण बिपरीत 'कर्मणि' इत्यस्य संवन्ध एव ज्ञाप्येत' इति परास्तम्। सेनाग्रहणस्य ज्ञापकत्वं तु नोक्तं सेनां चरति सेनायाञ्चेत्यर्थद्वये अपीष्टे। एवञ्च 'अधिकरण' इति 'कर्मणि' इति चोभयोरग्रेऽधिकारो यथायोगञ्च संवन्ध इति ध्वनितम् ॥ १६ ॥

---

दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्ति कर्तृ चित्रक्षेत्रसंख्या-जङ्घाबाह्वहर्यत्तद्धनुररुष्षु ( ३।२।२१ )

इत्याहुरिति। अत्रारुचिवीजन्तु वार्तिकस्य हेत्वादौ 'ट' वाधनेन चरितार्थतया सूत्रस्थकिमादिग्रहणस्य भाष्येऽप्रत्याख्यानेन वा हेत्वादौ सूत्रे किमादिग्रहणसामर्थ्यात् 'टा' भवत्येवेति। न च विपरीतमेवास्तु सूत्रस्थकिमादिग्रहणस्य सार्थक्याऽनुपपादनात् ॥ २१ ॥

---

## फलेग्रहिरात्मम्भरिश्च ( ३।२।२६ )

भाष्ये आत्मनो मुमिति । समासे कृते नलोपे च कृते ततः प्राग्वा मुम् निपात्य इत्यर्थः ॥ २६ ॥

---

## नासिकास्तनयोर्ध्माधेटोः ( ३।२।२९ )

एतावान् योग इति एतदन्वाख्यायकं वार्तिकमित्यर्थः । वार्तिकस्याऽपीति अपिना 'नाडीमुष्ट्योश्च' इति सूत्रस्याऽपि । मुष्टौ धमश्च इति वार्तिकं 'नाडीमुष्टयोश्च' इति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रमः कार्यः । 'यथा संख्य' सूत्रस्थभाष्ये स्पष्टम् । तत्सूत्रोपादानाद्द्वयद्वयि 'नाडीमुष्टि' विषये तत्सुत्रे यथासंख्यमुक्तन्तथाप्येतद्भाष्यवार्तिक-विरोधात् तद्भाष्यं 'प्रौढिवाद' इति बोध्यम् । एवञ्चाऽत्र 'नाडी' शब्देन 'ध्म' एव संबन्धो 'मुष्टि' शब्देनोभयोरिति बोध्यम् । पूर्ववार्तिकदूषणेन नाडीशब्दसंबन्धोऽप्युभयोरित्याह नासिका नाडीत्यादि । अत्र 'ध्मश्च' 'धेटश्च' इति वर्तते ॥ २९ ॥

---

## आढ्यसुभगस्थूलपलितनग्नाऽन्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ( ३।२।५६ )

ख्युनभावे करणे ल्युटोऽवश्यं सत्त्वेन 'अच्वौ' इति व्यर्थमित्याह भाष्ये ख्युना मुक्त इति । भाष्ये स एव च स्वरः लित्स्वरनित्स्वराभ्याम् । ल्युटा भाव्यमिति अवश्यभाव्यमित्यर्थः । तद्युक्तमिति भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहाथत्वाऽभावस्य भाष्यकृता बोधितत्वादिति भावः । केचिदेवेति स्पष्टप्रतीयमानक्रियादेशा इति भावः । द्रव्यो-

पलक्षणायेति अवस्थाविशेषविशिष्टस्योपलक्षणायेत्यर्थः । न तु क्रियाप्रकारको बोध इति तात्पर्यम् । वस्तुतस्तु अभिधान-स्वाभाव्यात्केषाञ्चिदेव क्लृप्तप्रयोगाणां गतिसंम्बन्धो न सर्वे-षामिति भाष्यतात्पर्यम् । भाष्ये इष्णुजिति 'भुवश्च' इत्यनेन । 'प्रदेवदत्त' इत्यत्र 'प्र' शब्दस्य देवनक्रियायां दानक्रियायां वाऽन्वयः । नाद्य इत्याह देवशब्दस्येति । नान्त्य इत्याह तदवय-वस्य चेति । तदवयवस्येति बहुव्रीहिः । 'व्याघ्रादौ' तर्हि संज्ञा-शब्दे कथं गतिसंबन्धोऽत आह व्याघ्रादयस्त्विति ॥ ५६ ॥

---

## कर्त्तरि भुवः खिष्णुच्खुकञौ ( ३।२।५७ )

भाष्ये न च ष्णुरिति पाठः । उदात्तत्वादिति । तेन 'एकाच उपदेश' इत्यस्याऽप्रवृत्तिरिति भावः । ननु 'कृत्यो-केष्णुज्' इति सूत्रेण नञः स्वराऽभावादाह नञ उत्तरस्येति । अन्तोदात्तविधायकमिदम्पूर्वपदप्रकृतिस्वरापवादः । ननु 'तदनु-बन्धक' परिभाषया 'इष्णुच' एव ग्रहणं भविष्यति न 'खिष्णु च' इत्यत आह इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे 'लक्षणप्रतिपदोक्त' परिभाषा (षया) 'तदनुबन्धक' परिभाषाबाधे च 'खिष्णुचः' करणेन षत्वणत्वयोरसिद्धत्वाऽभावे च सिद्धे इका-रोच्चारणं व्यर्थमिति 'अयमपीटि कृते' इति भाष्यतात्पर्यं न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ ५७ ॥

---

## स्पृशोऽनुदके क्विन् ( ३।२।५८ )

एकाचोऽयमिति भाष्ये यङ्लुगन्तात्त्वयं न क्विन् अन-भिधानादिति भावः । ननु 'क्वि' ग्रहणे क्विपोऽपि ग्रहणं स्यादत आह तदनुबन्धेति । अत्र सूत्रे कर्मणि इति संबध्यत

एव। 'मन्त्रस्पृग्' इत्यादि तु 'क्विपा' सिद्धम्। 'क्विन्प्रत्ययस्य' इति बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम् ॥ ५८ ॥

---

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च (३।२।५९)

अन्तोदात्तत्वश्चेति इदश्च 'क्विनो' नकारसत्त्वे उक्तम्। स्रगुष्णिहोर्निपात्यमानवस्तुनः स्पष्टत्वात्तन्नोक्तम्। क्रुञ्चामिति निपातनान्नलोपाऽभाव इति 'परेश्च' इति सूत्रे भाष्ये स्पष्टम् ॥ ५९ ॥

—:❀❀:—

## त्यदादिषु दृशोऽनालोचने कञ्च (३ २।६०)

ञकारः केवलस्वरार्थ उतान्यार्थोऽपीति विचारतात्पर्यमाह ञकारस्येति। भाष्ये यावका अत्राऽपीति। न च द्व्यनुबन्धकत्वादस्य 'क्नो' ग्रहणं न स्यादिति वाच्यं येनाऽनुबन्धेन द्व्यनुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः। यः कृतोऽर्थ इति प्रकृते दृशेः कर्तेत्यर्थः। भाष्ये इवाऽर्थेऽयं तद्धित इति। अयं भावः। यथा 'दृग्दृशवतुषु' इति सूत्रे 'दृक्षे' इतिवार्तिकबलादनुक्तोऽपि 'क्सः' कल्प्यते तथा इवाऽधिकारे तद्धिते त्यदादिभ्यो 'दृशट्दृक्षाः' प्रत्ययाः कल्प्याः। दृशटष्टित्वाच्च ङीबपि सिद्ध इति 'टिड्ढ' इतिसूत्रे 'कञ्' ग्रहणमपि न कार्यमिति लाघवमिति। भाष्ये तमिवात्मानं पश्यतीति प्रेरणाबुद्धावप्यन्तर्भावितण्यर्थत्वान्न णिच्, तमिवात्मानं जनान्दर्शयतीत्यर्थः। अत्र 'प्रेरणाबुद्ध्या' ऽधिकार्थत्वेनाज्ञानार्थत्वम्। कर्मण्युपपदे एवाऽयम्। तेन निवृत्तप्रेषणतया स इव पश्यतीति विग्रहोऽनुचितः, 'सत्सु द्विष' इति सूत्रे 'कर्मणि' इत्यस्य निवृत्तेः 'सत्सु'

इति सूत्रे भाष्ये ध्वनितत्वेनाऽत्राऽनुवृत्तेः सत्त्वात् । ननु 'कर्म कर्त्ता' इति व्यवहारोऽनुपपन्नः कर्मत्वाऽभावात्कर्मवद्भावाऽभावाच्चेत्यत आह कर्मण एवेति ॥ ६० ॥

---

## सत्सु द्विषद्रुहदुहयुजविदभिदच्छिदजनीराजामुपसर्गेऽपि क्विप् ( ३।२।६१ )

कर्मैवोपपदमिति 'कर्मणि' इत्यधिकारादिति भावः । 'सुब्' ग्रहणन्तु तन्निवृत्तिद्योतनायेति बोध्यम् । वस्तुतः 'सुब्' ग्रहणमेवाऽत्राऽनुवर्त्तते, 'कर्मणीति निवृत्तम्' इत्यन्वाख्यातमेवैतत् । अत्र सूत्रे 'उपसर्गेऽपि' ग्रहणं 'अनुपसर्ग' इत्यस्य 'आतो ऽनुपसर्ग, इति सूत्रादनुवर्त्तमानस्याऽग्रे निवृत्तिद्योतनाय । भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याय 'अनुपसर्ग' इत्यस्याऽनधिकारं द्योतयति । तत्फलं ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन 'प्रष्ठ' इत्यादिसिद्धिः । ननु 'वदः सुपि' इत्यत्र 'गदमद' इत्यतोऽनुपसर्गग्रहणाऽनुवृत्तिप्रदर्शनपरं वार्तिकं नाऽपूर्वकरणपरमत आह अनुपसर्गेति । यत्र चेति । यत्र 'स्पृशोऽनुदक' इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते । एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः । इदञ्चिन्त्यम् । अत्रापि 'आतोऽनुपसर्ग' इत्यतोऽनुवृत्तिसम्भवात् ॥ ६१ ॥

---

## अदोऽनन्ने ( ३।२।६८ )

## क्रव्ये च ( ३।२।६९ )

भाष्ये 'आमाद्' इत्येवमर्थमिति लोके एतत्सिद्ध्यर्थमित्यर्थः । क्रव्याद इत्यणेति आममांसभक्षणकर्त्तेत्यर्थ

इति भावः। 'पक्वमांस' शब्दे उपपदे अदेरण् उपपदस्य क्रव्यादेशः पृषोदरादित्वादित्यत्र तु न भाष्यानुग्रहः, क्रव्यशब्देन तदबोधाच्च। एवञ्च 'क्रव्याद' इत्यसाध्वेवेति बहवः॥ ६८॥

---

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् (३।२।७१)

भाष्ये श्वेतवहादीनामिति अनन्तरयोगे षष्ठी। पदस्येत्यस्य तदन्ते पदत्वस्य सम्भावनायामित्यर्थः। केचित्तु तत्संबन्धिनो ण्विनः स्थाने डस् वक्तव्य इत्यर्थ इत्याहुः। ननु डसुत्पत्तिवेलायां कथम्पदत्वमत आह भावीति। भाष्ये क्रियते वर्थमिति। तेन हकारादीनामेव रुत्वमिति भावः। भाष्ये उक्थशस्शब्दस्येति तत्प्रकृतिकस्येत्यर्थः। तन्न वक्तव्यमिति। ननु 'वासरूप' न्यायेन डस्विषये ण्विनोऽपि सत्वेन तदर्थं निपातनमावश्यकमिति चेन्न एतद्भाष्यप्रामाण्येनाऽऽदेशपक्षस्यैवौचित्यात्। कैयटे 'डस् प्रत्यय' इति व्यवहारः स्थानिवद्भावलब्धप्रत्ययत्वेनेति बोध्यम्। अवश्यं तद्वक्तव्यमिति डसारम्भेऽपीत्यर्थः। न तर्हीदानीमिति ह्वादीनामेव रुत्वं विधेयम्, दीर्घस्तु ण्विनि वृद्ध्यैव सिद्ध इति भावः। अन्यथा डसभावे इत्येतदपि संबुद्ध्यर्थमिति पदान्ते डसन्तत्वादिति भावः। ननु 'डस्' एव मास्तु तत्राऽऽह उक्थशोभ्याममिति। यदि मन्त्रे इति 'उक्थशस्शब्दस्य' इति भाष्याच्छंसेर्नलोपोपधावृद्ध्यभावयोर्निपातनाच्छासेर्वोपधाह्रस्वनिपातनाद्वृद्ध्यभावे 'उक्थशोभ्याम्' इत्यस्य सिद्धेः, शासेर्विचि संबुद्धौ 'उक्थशा' इत्यस्याऽपि सिद्धेर्द्वयमपि न कार्यमित्यन्ये॥ ७१॥

---

## स्थः क च ( ३।२।७७ )

सप्तमीनिर्देशादेव 'तदादिविधौ' लब्धे पुनर्वकारादाविति वचनं मुख्यवकारादिप्रतिपत्त्यर्थमिति वदन्तम्प्रत्याह भाष्यकारवचनेति। यद्वा 'यावान' इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह भाष्येति। अत एव 'ध्यायतेः सम्प्रसारणम्' इति वार्तिके 'दधातेर्वा धीः' इति भाष्ये क्विप्यपीत्वं कृतम्। वस्तुतो भाष्ये 'क्विप्' पदेन सादृश्याद् विज्' उच्यते इतीत्त्वाऽप्रसक्तिरेवाऽत्रेति बोध्यम्। भाष्ये कक्विपाविति 'आतोऽनुपसर्गे' इति 'क्विप् च' इति विहितौ। तत्र कस्य बाधे 'शंस्था' इति न सिध्येत् तदर्थं स्थः को विधेयः। 'कस्य' चाऽज्बाधकत्वेन क्विबपवादत्वाऽभावात्परत्वेन क्विपो नित्यबाधवारणाय क्विवपि विधेय इति भावः। न चाऽचैव 'शंस्था' इत्यस्य सिद्धत्वेन क्विपो बाधे फलाऽभावः। शंस्थाशब्दात् 'शसि' आतो लोपानापत्तेः। 'कृदतिङ्' इति सूत्रस्थभाष्योक्तरीत्यै कादेशस्य स्थानिवत्त्वात्। 'पुरस्ताद्' इति न्यायेन टस्यैव तेन बाध इति तु न शंक्यं, 'येन नाऽप्राप्ति' न्यायेन 'क्विप' एव बाध इत्यस्याऽपि वक्तुं शक्यत्वात्। तस्माद्बाधसामान्यचिन्तयोभयोरपि स बाधकः स्यादिति तात्पर्यम्॥ ७७॥

---

## सुप्यजातौ णिनिस्ताच्छील्ये ( ३।२।७८ )

भाष्ये अनुपसर्ग इत्येतमिति उपसर्गेऽपीति ग्रहणाद् ज्ञापकादित्यर्थः। एतेन 'सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्' इति वृत्तिकारोक्तमपास्तम्॥ ७८॥

---

## व्रते। (३।२।८०)

स्थायीत्यत्रेति। नन्वत्र कथं णिनिः सुप उपपदस्याऽभावादिति चेन्न उत्तरसूत्राद्बहुलग्रहणमपकृष्य केवलादपि विधानेनाऽन्नतेः। 'उत्थित एवाऽद्य भविष्यामि न तूपवेक्ष्यामि' इत्येवं संकल्परूपं व्रतमेतत्। 'तिष्ठन् मूत्रयत' इत्यादिवदुत्थाने 'स्था' धातुरत्रेति परे। ग्रह्यादिणिन्यन्तस्यैव वा प्रकरणाद्व्रतपरत्वम्। परिसंख्यया पूर्वपक्षः, बिधिमाश्रित्य परिहारः। यस्मिन्नहनीति एकादश्यादौ। भाष्ये तद्यथा स्थायीति 'स्थायी' इत्यत्रोपपत्तिरुक्ता। 'आस्थायी' इति पदमन्ये। 'स्थण्डिलस्थायी' इति पाठ इति केचित्, तदुभयमपि भाष्यकैयटविरुद्धम्। व्रतविषय इति न हि तादृशव्रतसम्भवः, व्रते णिनेः प्रकृतत्वाच्च प्रागुक्तसंकल्पस्त्वप्रसिद्ध एवेति भावः। अथ नाऽनुवर्त्तत इति 'उपमानं शब्दार्थ' इति सूत्रस्थषाष्ठभाष्येऽयमपि पक्षो दृश्यत इति भावः। अत्र पक्षे स्वरभेदोक्तिरेकदेश्युक्तिरिति बोध्यम्। षाष्ठभाष्यं वैकदेश्युक्तिः। भाष्ये सुजिप्रतिषेधवाचिन इति तदर्थबोधकस्य 'नञ' इत्यर्थः। सुप्युपपद इति। बहुलग्रहणन्तु क्वचिदिष्टसिद्ध्य इति भावः॥८०॥

---

## आत्ममाने खश्च ( ३।२।८३ )

पूर्वं ❀ कर्मण इदानीं कर्तृत्वाऽभावेन युगपदेकस्य कर्मकर्तृत्वविरोधेन चेदमसङ्गतमत आह यदेति! केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्मविरोध इति भावः। आत्मग्रहणमनर्थकमिति यद्यपि 'उभयप्राप्तौ' इति नियमादपि न कर्त्तरीति वक्तुं शक्यं तथाऽपि उभयोः प्रयोगाऽभावादत्र तदप्राप्तिः। किञ्च तेन षष्ठ्यां समासाऽप्राप्तिः 'कर्मणि च' इति निषेधादित्याश-

❀ 'पूर्वकर्मण' इति ख पाठः।

यमाहुः । तद्ध्वनयति भाष्यकृद् 'आत्मग्रहणसामर्थ्यात्कमणि' इति । लान्तस्येति । इदमुपलक्षणं कर्मस्थक्रियया तुल्य क्रियया ❀ तुल्यक्रियत्वस्याऽपि । वस्तुतः 'कर्मकर्तृग्रहणम्' इति भाष्यस्य कर्मवद्भावो वक्तव्य इत्यर्थः । यथाऽस्याऽपि कर्म-कर्तृत्वेन ग्रहणं व्यवहारो भवति तथा वक्तव्यमित्यक्षरार्थः । श्यनैव तत्फलसिद्ध्या तत्प्रत्याख्यानम् । भाष्ये यदयं तासेरिति । लाऽवस्थायां स्यतास्योरुत्पत्तौ तु वाचनिकमेवेदमिति बोध्यम् ॥ ८३ ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य द्वितीये पादे प्रथममाह्निकम् ॥ १ ॥

## भूते ( ३।२।८४ )

यस्य स्वसत्ता व्यपवृक्तेति अतीतेत्यर्थः । तस्यैवेति अन्यत्र तत्कालवृत्तित्वेन भूतशब्दप्रयोगो गौण इति भावः । एतदाशयाऽनभिज्ञस्य 'न वै' इत्यादिग्रन्थ इति तात्पर्यम् । अभ्यनुज्ञा प्रतिबन्धार्थाभ्यामिति † तद्रूपाभ्यामर्थाभ्यामित्यर्थः । तत्राऽ-

---

❀ 'तुल्यक्रियया' इति खे नास्ति ।

† अत्र कखयोः क्रमेण 'अनुज्ञाप्रतिषेधार्थाभ्याम्' 'अनुज्ञाप्रति वन्धार्थाभ्याम्' इति पाठो दृश्यते । मुद्रितकैयटे 'अनुज्ञाप्रतिबन्धाभ्याम्' इति च । किन्तु 'तद्रूपाभ्यामर्थाभ्याम्' इति नागेशविवरण-दर्शनाद् 'अभ्यनुज्ञाप्रतिबन्धार्थाभ्याम्' इति पाठेन भाव्यमिति भाति । 'अर्थ' पदाऽभावे 'तद्रूपाभ्याम्' इत्यस्य कथं लेखः । वस्तुतस्तु 'अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः । जन्मादयो विकाराः षट् भावभेदस्य योनयः' इति एतदर्थप्रतिपादकवाक्यपदीयस्य प्रथमकाण्डीयतृतीयकारिकाव्याख्याने 'ततश्च प्रतिभावं स्वरूपस्य प्रतिबन्धाऽभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवाऽऽभासोपगमो लक्ष्यते' इति हेलाराजः 'प्रतिबन्धा ऽभ्यनुज्ञाभ्याम्' इति लिखति । अत्र सन्देहे केन पाठेन भाव्यमिति सुधियो विभावयन्तु इति सम्पादकः ।

भ्यनुज्ञया स्थित्युत्पत्तिहेतुः । प्रतिबन्धेन प्रलयहेतुः । ईश्वराऽधिष्ठितत्वेन च तदुपपत्तिः । ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाऽभावात्कथं भूतत्वव्यवहार इत्यत आह तत्र संसर्गीति । तत्क्रियोपाधिभूतया यो भेद उपाधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः । अन्ये त्विति । तथा च तस्या अनित्यत्वात्सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम्, 'उत्तरदेशसंयोगाऽवच्छिन्नक्रिया' इति चेत्तस्या विशेष्यविशेषणसंबन्धरूपत्वे त्रयाणामपि स्थिरत्वात्क्षणव्यवहारनियामकत्वाऽभावः । अतिरिक्तत्वे सिद्धोऽतिरिक्तः क्षणपदार्थ इति । तत्प्रचयैरेव कलामुहूर्त्तादिव्यवहारोपपत्तौ किमखण्डेन तेन । स्पष्टश्चेदं 'कालाः परिमाणिना' इत्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽपि एष दोषोऽस्त्येव । किञ्च 'प्रसिद्धपरिमाणा' इत्युक्तिरसङ्गता तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थाऽऽपत्तिरिति दिक् । शब्दस्येति स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसंबन्धाऽयोग्यत्वादिति भावः । तदाह गुणस्येति नित्यत्वाद्वेति अनेन भूतादिव्यवहाराऽयोग्यत्वं दर्शयति । वैयर्थ्यादिति । अनुच्चारितात्प्रत्ययविधेरसम्भवादिति भावः । न च शब्दस्येति भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यतायां * सम्भवो नेत्यर्थः । अनित्यत्वपक्षेऽपि यथा 'वर्त्तमान' शब्दस्य प्रकृतित्वसम्भवो न तथा 'भूतभविष्यतोः' शब्दयोः प्रकृतित्वसम्भव इति योजना बोध्या । क्रियायाम्भूतायामिति । तस्याम्भूतत्वञ्च वर्त्तमानध्वंसप्रतियोगिकालवृत्तित्वम् । भूतकालेनेति भूतकालक्रियावाचकेनेत्यर्थः । अव्ययनिर्देशादिति वार्त्तिकेऽव्यय-

* 'विशेष्यतायाः' इति के पाठः ।

पदमर्श आद्यजन्तं न्यासोत्तरपरञ्चेत्याशयेनाह अव्ययवतेति। अव्ययमेष इति अव्ययस्य 'भूते' शब्दस्य निर्देशादिति वार्त्तिकार्थ इति भावः। नित्येनाऽर्थेनेति साधुत्वज्ञानं न शाब्दे कारणं नाऽप्यसाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः। परमतेऽपि शिष्टोच्चारितत्वेन साधुत्वाऽनुमानाद्बोधः। शास्त्रजं तत्प्रत्यक्षन्तु पश्चाद्भविष्यतीत्यदोषः। यदि तु शास्त्रेणैव निष्पाद्यः स्यात्स्यादयं दोष इति भावः। भाष्ये न व्येतीति विविधमर्थं न प्राप्नोतीत्यक्षरार्थः। शास्त्राऽभावेऽपि तदर्थक एवाऽयमिति भावः। तदुक्तं कैयटेन 'नित्यत्वमित्यर्थ' इति। क्व पुनर्न व्येतीति क्वेति विषयसप्तमी, कस्मिन् विषये विविधमर्थं न प्राप्नोतीत्यर्थः। तत्रोत्तरमाह भाष्ये एतौ कालविशेषाविति। तद्विधानस्येति तस्मिन् विधानं यस्येत्यर्थः। 'भूत' शब्दवत् तेऽपि स्वभावत एव भूतमात्रवाचका भवन्ति, किमधिकारेणेति भावः। सामान्ये नेति कालसमान्ये नेत्यर्थः। 'सामान्ये' इति सप्तम्यन्तपाठस्तु युक्त एव। ननु वृत्तौ 'कर्मणि' इति सूत्रे 'कुत्सित' ग्रहणं कृतमिति अकुत्सितार्थन्तदिति चेन्न 'कुत्सित' ग्रहणस्य भाष्येऽभावात्। शब्दशक्तिस्वभावसिद्धञ्चेत्तत्राऽपीति भाष्याशयः। ननु तेनैव सिद्धे 'कुमार' इत्यादि व्यर्थमिति चेत्तत्राह पुनर्विधानन्त्विति। 'कुमारहन्ता' इत्यादिव्यावृत्तय इत्यर्थः। विशेषविहितः उपपदविशेषे विहितः। इत्ययम्भूतेऽपीति इत्ययमपि भूते प्रसज्येतेत्यन्वयः। तक्कौण्डिन्येति कुमारशीर्षयोर्विशेषविहितो णिनिः 'कर्मणि हन' इत्येतं बाधते। तत्र तेनाऽपि णिनेरेव विधानेन णिनेर्बाधस्य वक्तुमशक्यतया तत्सहचरितभूतकालो बाध्यत इति वर्त्तमानभविष्यतोरेव 'कुमार' इत्यादिणिनिर्भवति। एवञ्च तद्बाधनेन चरितार्थं शास्त्रमिति 'वासरूप' न्यायबाधे मानाऽभावेन 'कुमारहन्ता' इत्याद्यपि सिध्य-

तीति भावः। 'कुमारघाती' इत्यादौ विधीयमानः 'कुमार' इत्यादिणिनिर्भविष्यद्वर्त्तमानयोर्यथा स्यात्तस्य भूतार्थे निवृत्तिश्च यथा स्यादिति भूताधिकार इति भाष्याक्षरार्थः। इदश्चिन्त्यं 'तक्रकौण्डिन्य' न्यायस्य विधेयविषयत्वात्। तस्माद्भूताऽधिकाकारसामर्थ्यात् 'कर्मणि हन' इत्यत्राऽयमेव णिनिः। भूत' इति नियमादन्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थः। यथाऽस्य णिनेरधिकाराऽभावेऽपि स्वभावत एव भूते वृत्तिस्तथा 'कुमार' इत्यस्य स्वभावत एव भूते निवृत्तिर्भविष्यतीत्यरुचेः प्रयोजनान्तरमाह भाष्ये आखुहेति। यज्ञसंयोग इति यज्ञसंयोगविषये शता ङ्वनिपस्त्रिषु कालेष्वपवादो माभूदित्यन्वयः। प्रसङ्गाद्वर्त्तमानाऽधिकारस्याऽपि प्रयोजनप्रदर्शनं वार्तिके भूताऽधिकारस्येत्युपलक्षणम्। तत्र ङ्वनिब् भूताऽधिकारे। शता वर्त्तमानाऽधिकारे। ङ्वनिपं 'सुयजोर्ङ्वनिब्' इति विहितम्। कालभेदो न स्यादिति वाऽसरूपेण वर्त्तमानेऽपि 'ङ्वनिप्' प्राप्नोतीति भावः।

नजिङेति 'स्वपितृषोर्नजिङ्'। अयं वर्त्तमानाऽधिकारे। लिट् भूता ऽधिकारे लिट्। छन्दसि लिट् 'लिटः कानज् वा क्वसुश्च' इत्यस्य। भाष्ये सर्वकालाऽपवाद इत्यस्य सर्वकालद्योतकप्रत्ययाऽपवाद इत्यर्थः। भूतकाललिटोऽपीति यावत्। असत्यधिकार इति 'वर्त्तमान' इत्यधिकारेऽसतीत्यर्थः। सतिलिति 'वर्त्तमान' इत्यधिकारे सति 'उणादय' इत्यस्य तदधिकारस्थत्वादसिर्वर्त्तमानकाल इति भावः। रूढिशब्दत्वादेवोणादिषु 'वाऽसरूप' विधिर्नास्तीति तात्पर्यम्। एतत्प्रयोजनोक्तिरेकदेशिन उणादीनामव्युत्पन्नत्वेऽसम्भवात्। ण्वुल्तृचोरपि वर्त्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्य उक्तत्वेन 'अन्यत्र अनाहन्ता' इत्यस्याऽसङ्गतेश्च। असत्यधिकार इति भूतवर्त्तमान-

योरधिकारयोरसतोरित्यर्थः। कानच इति 'क्वसो' अप्युपलक्षणमिदम्। यद्वा कानजुपलक्षितस्य लिट इत्यर्थः। 'ल सार्वधातुक' इति तत्र 'चानशः' सार्वधातुकत्वेऽपि लादेशत्वाऽभावः। 'कानचो' लादेशत्वेऽपि 'आर्धधातुकत्वम्' इत्युभयत्राऽप्यन्तोदात्तत्वमेवेति भावः। कर्त्रभिप्राय एवेति अन्यस्मिंस्तु 'क्वसुः' इति भावः। भाष्ये चानश् ताच्छील्यादिषु सर्वकालाऽपवादो माभूदित्युत्तरम्, 'अग्निमादधानस्य' इत्येव पाठः। सुषुपुषोऽनेहाऽग्निम्' इत्यपाठः। आदधानस्येत्येवाऽन्यत्रेति भूतार्थाऽतिरिक्तवर्त्तमानत्वविवक्षायाम् अकर्त्रभिप्राये कर्त्रभिप्राये च 'आदधानस्य' इत्येव। भूते तु कर्त्रभिप्राये एव। तथा अकर्त्रभिप्राये तु 'क्वसुः' एवेत्यर्थः॥ ८४॥

---

## ब्रह्मभ्रूणवृत्रेषु क्विप्॥ (३।२।८७)

किं धातूपपदेति भाष्ये नियमार्थोऽयमारम्भः किमविशेषेणेत्येव पाठः। 'ब्रह्मादिष्वेव' इत्यादिनियमाऽऽकारलेखस्तु लेखकप्रमादात् अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरतिरस्कारात्पुनः प्रश्नाऽनुपपत्तेः। 'उपपदविशेष' इति नियमस्य सजातीयापेक्षत्वाद् 'हन्तेः क्विबुपपदविशेष एव' इत्यर्थः। एतस्मिंश्च विशेष इति भूत इत्यर्थः। 'भूते हन्तेः क्विप् ब्रह्मादिष्वेव' इति नियम इति भावः। तदाह अनेनेति धातोर्ब्रह्माद्यतिरिक्ते उपपदे भूतकालाऽवच्छिन्नेऽर्थे वर्त्तमानात्, क्विपोऽसंवन्धबोधकत्वादिति भावः। भाष्येऽथेति एतन्मात्रनियमाऽङ्गीकारे इत्यर्थः। कालनियम इति भूतकालाऽवच्छिन्नाऽर्थाद्धातोः क्विबतिरिक्ताऽसंवन्धबोधकत्वादिति भावः। तत्र केवलधातोः प्रत्ययान्तरसंबन्धस्याऽवारणात्तात्पर्यतः 'कालनियमोऽयम्, इति

बोध्यम्। नियमद्वयमिति 'ब्रह्मादिष्वेव' क्विवेव' इति कल्प्यमानस्यैवकारस्य श्रुत्युपस्थापितेऽन्वयो न्याय्यः। स च भाष्यप्रामाण्यादुभयत्राऽपीति तत्त्वम्। उत्तरस्य वचनार्थ इति सापेक्षत्वेऽपि गमकत्वात्समासः। धातुनियमस्येदं मानमिति दर्शयति यस्मादिति। नन्वेतदर्थं 'छन्दसि' इत्येवास्तु सामर्थ्यादुपपदान्तरे भविष्यति किं 'बहुल' ग्रहणेनेत्यत आह भाष्ये न च भवति। अमित्रेति तावन्मात्रोक्तौ 'क्विबेव' इति नियमाद् 'अण्' न स्यात्स भवत्वित्येतदर्थं 'बहुल' पदमिति भावः॥ ८७॥

---

## कर्मणीनिर्विक्रियः। (३।२।९३।)

ननु 'कर्मणः' कथं कुत्सितत्वमत आह यस्य सोमेति॥९३॥

---

## निष्ठा (३।२।१०२)

'तौ सद्' इति वचनमित्यादि वार्त्तिकं 'तौ सद्' इति सूत्रे। तेन समानन्यायमिदमित्याह भाष्ये असंसक्तयोरिति। 'तौ' इत्युक्ते हि अगृहीतविशेषस्वरूपमात्रपरामर्शान्न दोष इति भावः। 'भिन्न' इत्यादौ 'ञीतः क्त' इति वर्त्तमाने क्तः। यदि पुनरिति भाष्यम्पूर्वोक्तेन पुनरुक्तमित्याऽऽशंक्याह यौ लौकिके इति। न दृष्टाविति अनुबन्धविशिष्टौ न दृष्टावित्यर्थः। कथमश्रुतत्वमत आह एतदुक्तम्भवतीति। भाष्ये दृष्टश्रुतयोरिति 'ञीतः क्त' इत्यादौ। अत्र शास्त्रज्ञानां तत्त्वप्रत्यभिज्ञानात्प्रयोगेऽनुबन्धविगमेऽपि दृष्टत्वं बोध्यम्। भाष्ये द्विः क्तेति तद्बोधकग्रहणमित्यर्थः। क्तक्तवतू भूते, तौ 'निष्ठा' इति सामान्येनेति एकत्वपदेन तदाश्रयो लक्ष्यते। साधारणपर्यायश्च 'एक' शब्द इत्यन्ये। ननु वृद्ध्यादिसंज्ञाऽपि कृत्रिमत्वादनित्यैव तत्कथं तत्राऽयं समा

धिर्नेहेत्यत आह वृद्ध्यादिकेति । विषयनियतत्वादिति संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वात्संज्ञा नित्या, साधुत्वाऽन्वाख्यानस्य च सम्भवो नैवम्प्रकृते इति भावः। ननु संज्ञायाः स्वतो भावित्वमनुपपन्नमत आह संज्ञिन इति। सामर्थ्यादिति अन्यस्योत्पन्नस्य 'निष्ठा' संज्ञाया अभावादिति भावः। आदिकर्मणीति 'कर्म' शब्दः क्रियावाची। एकफलोद्देशप्रवृत्तसमूहरूपा च क्रिया। तत्र वार्त्तिकफलं दर्शयति आद्येष्विति। सम्पूर्णसमूहस्य व्यपवृक्तत्वे हि भूतव्यवहार इति भावः। क्रियाक्षणेष्विति अत्र 'क्षण' शब्दः सूक्ष्मग्राह्यकालोपलक्षणम्, अन्यथा क्षणरूपत्वे क्रियायास्तद्वदेव सूक्ष्मकालाऽवच्छिन्नत्वात्प्रत्यक्षत्वाऽनापत्त्या 'पश्य मृगो धावति' इत्यादेर्लोपाऽऽपत्तिरिति बोध्यम्। वस्तुतः क्रिता प्रत्यक्षैव फलाऽनुमेया च। तद्ध्वनयति भाष्ये अत्यन्ताऽपरदृष्टेति अवयवरूपेण समुदायरूपेण चाऽप्रत्यक्षेत्यर्थः। 'पश्य मृगो धावति' इत्यादिप्रयोगस्तत्फलसंयोगदर्शनाऽभिप्रायेण, 'दृशेः' वा ज्ञानसामान्यलक्षणा, निरूपयिष्यते चेदं 'वर्त्तमाने लट्' इति सूत्रे। आद्येषु क्रिया लक्षणेष्विति कचित्पाठः। तत्राऽऽद्येषु क्रियाऽवयवेष्वित्यर्थः। ञीतः क्त इति यदि तद्विषयमेव स्याद् 'वर्त्तमान' ग्रहणमेव कुर्यादिति चिन्त्यमिदमिति हरदत्तः। तेन 'क्ताऽनुमानेऽपि क्तवत्वर्थं वचनमावश्यकम्' इत्यपरे। यस्माल्लट इति धात्वर्थवर्त्तमानत्व एव यतो लोके विकल्पेन प्रपुज्यतेऽतो वक्तव्येत्यर्थः। यद्व भवन्त्यर्थे वा भाष्यत इति भाष्येऽन्वयः। भाष्ये आदिरत्रेति आद्यक्रियाक्षण इत्यर्थः। ननु तस्य भूतत्वेऽपि धात्वर्थस्य किमाऽऽयातमत आह आदिभूत एवेति। समाप्तत्वात् आरोपितत्वात्। प्रतिभेदं प्रत्यवयवम्। समूहिषु अवयवेषु। समाप्यत आरोप्यत इत्यर्थः। अभेदे अवयवे समूहाऽभेदे। तेन क्रिया न दृश्यत इति अत्यन्त-

मवयवशः समूहशश्च न दृश्यत इत्यर्थः । अनवस्थानाच्चेति अनेनाऽवयवस्याऽप्यप्रत्यक्षत्वं क्षणिकत्वेनाऽनवस्थानादित्यर्थः । क्रमात्सद्सतामिति भूयोऽवयवसन्निकर्षः 'समूह' प्रत्यक्षे कारणमिति भावः । चक्षुरादिभिरसंबन्धे हेतुः सद्वस्तुविषयैरिति । येन शब्देनेति सामानाधिकरण्ये तच्छब्देनाऽपि तस्यैव परामर्शात् शब्दे परिसमाप्तिरुक्ता स्यात् । न च सा युक्तिमती । अतो वैयधिकरण्येन व्याचष्टे येनाऽवयवेनेति । संबध्यते यत्रयत्राऽवयवे आरोप्यत इत्यर्थः । यो योऽवयवः फलाऽनुकूलत्वेन विवक्ष्यते तत्रैव समाप्यते । तत्रावयवे समाप्ते समूह एव समाप्यतेऽतीतो भवतीत्यर्थः । वेणिका कटचरमाऽवयवः । तदन्तः कट इत्यस्य तदन्तकटनिर्वर्त्तकः क्रियासमूह इत्यर्थः ( १०२ )

---

## लिटः कानज्वा ( ३।२।१०६ )

## क्वसुश्च ( ३ २।१०७ । )

वाऽसरूपविधिरिति ननु 'हशश्वतोर्लङ् च' इति ज्ञापकादादेशगतवैरूप्यमादाय 'ल' विधौ वाऽसरूपो नास्तीत्युक्तम्, एवञ्च प्रकृते स्यादेव, न च प्रत्ययविधिविषयस्याऽऽदेशेष्वभावः आदेशविधावपि 'प्रत्यय' इत्यस्योपस्थितेः, 'आद्युदात्तश्च' इति सूत्र भाष्यसम्मतत्वादिति चेन्न एतद्ध 'वा'ग्रहणादादेशरूपप्रत्ययविधौ तदनुपस्थितिकल्पनात् । तत्फलं सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न पक्षे तिङ इति भावः । उत्तरत्रेति केचित्तु 'तस्य धातुसंबन्धे विधानेनाऽधातुसंबन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङ् ❀ श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्य' इत्याहुः । यत्तु 'वृत्तौ 'लिड्' इत्यनुवर्त्य विभक्तिविपरिणा-

❀ 'तिङश्रवणार्थम्' इति 'ख' पुस्तके पाठः ।

मेन सिद्धे 'लिड्'ग्रहणेन लिण्मात्रस्यादेशो ज्ञाप्यते इति 'वा' 'वचनमावश्यकमेव' इत्युक्तं तन्न प्रकृतभाष्यविरोधादित्याहुः । भाष्ये पुनः कित्करणादिति 'आरिवान्' इत्यादौ गुणस्तु 'ऋच्छत्यृताम्' इत्यत्र ऋकारान्तरप्रश्लेषेण 'ऋ' धातोः पुनर्विधानाद्बोध्य इति दिक् ॥ १०७ ॥

---

## भाषायां सदवसुश्रुवः । ( ३।२।१०८ )

इति मत्वाऽऽहेति एवञ्च विकल्पमात्रविधानेऽस्य तात्पर्यमिति भावः । अनद्यतनपरोक्षयोरिति वचनस्य तयोरपि क्वसुर्विधेयः । तेन च तद्विषयो 'लिड्' अनुमातव्यः । स, च 'वा' इत्यर्थः । ननु भूतसामान्येऽनुमितस्य विशेषपरताऽपि भविष्यति किमनेनेत्यत आह भाष्येऽपवादेति । तद्व्याचष्टे लुङोऽपवाद इति । ननु अनद्यतनादौ 'लिड्' वैकल्पिकस्तस्य नित्यं 'क्वसुः' इति 'उपससाद' इति न स्यादत आह एतदादेशेति । 'अनद्यतन' इत्यादिवचनेन तयोरप्यनेन 'लिड्' अनुमानान्न दोषः । ननु 'वा' ग्रहणाऽनुवृत्तौ क्वसोर्विकल्पः स्यादत आह तच्च नेति । व्याख्यानादिति भावः ॥ १०८ ॥

---

## उपेयिवाननाश्वाननूचानश्च ( ३।२।१०६ )

इडागमादिति 'वस्वेकाजाद्घसाम्' इत्येकाज्लक्षणादित्यर्थः । द्वित्वे कृतेऽनेकाच्त्वात्तदप्राप्तेरनित्यत्वमिट इति भावः । नन्वेकादेशे कृते एकाच्त्वात्तत्प्राप्तिरिति सोऽपि नित्य इत्यत आह तत्सामर्थ्यादिति ।'न चेति तत्र द्वित्वे सवर्णदीर्घं बाधित्वेणो यणि निमित्ताऽभावादेकादेशाऽप्राप्तौ दीर्घः साऽवकाश इति भावः ।

विशेषेति वलादित्वरूपेत्यर्थः । तदाऽजादाविति प्राप्तविषय एव प्रतिप्रसवसम्भवादिति भावः । किञ्च, पूर्वस्यैव विधौ स्थानिवत्त्वं, न पूर्वपरयोरिति सिद्धान्ताद् 'ईयतुः' इत्यादौ तदप्रवृत्त्या सवर्णदीर्घाऽप्राप्तेरभ्यासदीर्घस्य नैकादेशबाधकत्वमितीट् सिद्ध एवेति न तन्निपातनफलमित्यपि बोध्यम् । ईयादेश इति अन्यथेटि कृते 'इणो यण्' इति स्यादिति भावः । तदर्थमिति ईयादेशे दीर्घोच्चारणमसन्ध्युच्चारणञ्च 'उप' इत्यस्याऽविवक्षायां वीजं द्रष्टव्यम् । भाष्ये 'इय्' इति ह्रस्वपाठे 'ईयिवान्' इत्यादौ छान्दसो वर्णव्यत्ययो बोध्यः । लोके तु 'उपेयिवान्' इत्येव साधु, 'उप' इत्यस्याऽविवक्षायां मानाऽभावादित्यन्ये । भाष्ये न हि दीर्घत्वमिति 'ईयतुः' इत्यादौ प्रागुक्तरीत्या चारितार्थ्यादिति भावः । न हीति किन्तु शास्त्राऽतिदेश इति भावः । रूपाश्रयश्चेति 'अक्' 'अच्' पदाभ्यां तत्तद्रूपेणोपस्थितयोरेव दीर्घ इति भावः । ननु कार्याऽतिदेशे दोषस्तदवस्थ इत्यरुचेराह अथ वेति । वस्तुतः 'पूर्वस्यैव विधौ स्थानिवत्त्वम्' इति नाऽत्र स्थानिवत्त्वमिति बोध्यम् । भाष्ये निष्प्रतिद्वन्द्व इति एकादेशात्पूर्वमिटोऽभावे यण्प्राप्तेरिति भावः । यणादेशो निपात्यत इति एकादेशबाधकतयेति भावः । इणो भाषायामिति पूर्वसूत्र एव 'इण्' ग्रहणं कार्यमिति भावः । भाष्येऽस्य पुनरिट् चेति द्वित्वे कृते एकादेशे तत्प्राप्तेरिति भावः । न विहन्यतेऽस्येति अस्य 'इटो' निमित्तं द्विर्वचनेन न विहन्यते यत इत्यर्थः । लकाराणां भावकर्मणोरपि सत्त्वेन तत्राऽप्यनूचानः ❀ स्यादतो भाष्ये कर्त्तरीति ॥ १०६ ॥

---

❀ अनूचानः साऽङ्गवेदकोविदे विनयाऽन्विते इति हैमः ।

## लुङ् ( ३।२।११० )

भाष्ये लुङ्लृटोरिति तुल्यन्यायत्वात् 'लृटः' अप्युपन्यासः। कालविशेषे इति 'अगमाम' इत्याद्युदाहरणेषु अनद्यतनरूपतेत्यर्थः। सतोऽप्यविवक्षयेति सतामेव लोम्नां सत्त्वेन विवक्षया नञ्घटितप्रयोग इति भावः। नन्वसतो विवक्षानिरूपणस्य प्रकृते नोपयोगोऽत आह विवक्षोपेति। भाष्ये न्याय्ये प्रत्युत्थाने इति प्रत्युत्थानं जागरणं, तत्समये प्रत्युत्थितं प्रबुद्धमित्यर्थः। प्रत्युपस्थितमिति पाठेऽप्ययमेवार्थः। प्रस्थितमिति क्वचित्पाठः। तत्रापि प्रत्युत्थाय ❀ प्रस्थितमित्यर्थः। स च रात्रेश्चतुर्थयाम एव, तत्र स्मृत्या प्रबोधस्योक्तेः। तदाह रात्रेरिति अतिक्रान्तरात्रिप्रहरत्रयं जागरितवानिति, एवं हि पूर्वतनस्य प्रत्युत्थितं कश्चित्पृच्छतीति ग्रन्थस्याऽसङ्गतिः, स्वापं विना प्रत्युत्थानाऽसम्भवात्। तस्माच्चतुर्थे यामे यदा जागरणसन्ततिरिति भाष्यार्थः। तत्र मुहूर्त्तमपि स्वापे 'लङ्' एवेत्यर्थ इति केचित्॥ ११०॥

---

## अनद्यतने लङ् ( ३।२।१११ )

अनद्यतन इति यदि तत्पुरुषः पर्युदासश्च तर्हि व्यामिश्रे दोषः। प्रसज्यप्रतिषेधेऽसमर्थसमासो भूतसामान्ये च स्यादत आह भाष्ये बहुव्रीहिनिर्देश इति। तथा चाऽविद्यमानाऽद्यतनभूतकालार्थवृत्तेर्धातोः 'लङ्' इत्यर्थः। एवञ्च व्यामिश्रे न, भूतसामान्येऽपि नेत्यर्थः। गौणाऽऽधारत्वाऽऽश्रयणे वीजमाह न तु तत्त्वत इति। कालस्याऽपीति यथा दिने 'मुहूर्त' इति। न च तावता मुहूर्त्तसमुदायाऽतिरिक्तं दिनमस्तीत्यर्थः। अनु-

---

❀ 'प्रत्युत्थानाय' इति 'के' पाठः।

गम्यते प्रमाविषयो भवति । भाष्ये जघानेति कंसवधो हि नेदानीन्तनप्रयोक्तुर्दर्शनयोग्योऽपीत्यर्थः । 'अरुणाद्' इत्युदाहरणे तु तुल्यकालः प्रवक्तेति बोध्यम् ॥ १११ ॥

---

## विभाषा साऽऽकाङ्क्षे ( ३।२।११४ )

साऽऽकाङ्क्षेऽर्थे वर्त्तमानाद्धातोरित्यर्थः । तत्रैकस्य साऽऽकाङ्क्षत्वेऽप्युभयत्र कथं लृडिति शङ्कते भवेत्पूर्वमिति । यदतीति वासगमनादेर्लक्षणत्वे हेतुमाह तच्चेति । यत् परबोधनार्थमुपादीयते तदेव लक्षणमित्यर्थः । यत्तत्स्मार्यमाणत्वाल्लक्ष्यं भोजनादि, तत्प्रति भवतु लक्षणं साऽऽकाङ्क्षमित्यन्वयः । यद्यपि पुरुषगताऽऽकांक्षयैवाऽर्थानां साऽऽकांक्षत्वव्यवहार आकाङ्क्षायाश्चेतनधर्मत्वात्, तथाऽपि तस्यापि गमनेन 'सक्तु✽पानं बोधयिष्यामि' इत्येवाऽऽकांक्षा न तु विपरीतेति भावः । द्वयोरपीति उक्ताऽऽकांक्षायां द्वयोरपि विषयत्वादिति भावः । परस्पराऽपेक्षत्वादिति चिन्त्यं लक्ष्यस्य लक्षणाऽनपेक्षाया भाष्ये दर्शितत्वात् ॥ ११४ ॥

---

## परोक्षे लिट् । ( ३।२।११५ )

इन्द्रियाऽविषय इति इन्द्रियजन्यज्ञानाऽविषय इत्यर्थः । तथाऽपीति यस्य क्रियायां व्यभिचारस्तत्पारोक्ष्यं किमिति प्रश्नार्थ इति भावः । इन्द्रियाऽगोचरत्वमेव पारोक्ष्यम् । तच्च साधनद्वारा क्रियायामित्याशयेनोत्तरयति परमित्यादि । मयूरंति तत एव 'पर' शब्दस्य पूर्वनिपात इति बोध्यम् । योगविभागस्य भाष्येऽदर्शनादाह अत एवेति । प्रतिपरेति शरदाद्यन्तर्गणसू-

---

✽ तालव्यादि 'शक्तु' इति 'सचतेर्दुर्धावो भवति' इति भाष्यादशुद्धम् इति सं० ।

क्षम्। इन्द्रियाऽजन्यं ज्ञानं परोक्षम्। अत एव 'परोक्षं ज्ञानम्' इत्युपपद्यते। अर्श आद्यचा तद्विषयोऽपि तथा। अत एव 'क्रियायाम्परोक्षायाम्' इति भाष्यप्रयोग उपपन्नः। निर्भाग इति सभागनिपातनस्य गुरुत्वादिति भावः, अवयवाऽर्थाऽप्रतीतेश्च। इन्द्रियाऽगोचरार्थवाचीति तद्विषयकज्ञानवाचीत्यपि बोध्यम्। ननु कान्तः सर्वस्याऽपि 'इदानीम्' इत्यादिव्यवहारेणाऽपरोक्ष एवेत्यत आह यथेति। नित्यपक्ष इति नित्यत्वपक्ष इत्यर्थः। भाष्ये प्रत्यक्षपरोक्षतायामिति प्रत्यक्षत्वपरोक्षत्वयोर्विशेषणतायामित्यर्थः। तत्र प्रत्यक्षत्वेन विशेषणस्य क्वाप्यभावात्तदुपादानमत आह यथा प्रत्यक्षत्वमिति। युगपदसन्निधानादिति अतः सद्वस्तु विषयैरिन्द्रियैर्न गृह्यते इत्यप्रत्यक्षा एवेत्यर्थः। एवञ्चैकैकस्य प्रत्यक्षत्वेऽपि समूहरूपो धात्वर्थः परोक्ष एव। अत एव 'पिण्डीभूता निदर्शयितुमशक्या' इत्युक्तमिति भावः। वस्तुतोऽवयवशोऽप्यप्रत्यक्षत्वमेवेत्युक्तं प्राक्। किञ्चाऽवयवशः प्रत्यक्षत्वे एकैकत्राऽवयवे समुदायरूपाऽऽरोपेण भूतत्वादिवत् प्रत्यक्षत्वस्याऽपि सम्भवेन तद्व्यावृत्त्यर्थं 'परोक्ष' इति विशेषणोपपत्तौ साधनादिप्रत्यक्षत्वेन तत्प्रत्यक्षत्वोपपादनं भाष्योक्तमसङ्गतं स्यात्। अत एव 'अत्यन्ताऽपरदृष्टा' इति 'अत्यन्त' पदं चरितार्थम्। नन्ववयवानां सौक्ष्म्यादप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वं स्यादत आह अशक्येति। पिण्डीभूताऽपि निदर्शयितुमशक्या, अवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाऽभावादिति भाव इति बोध्यम्। साधनेषु चेति भाष्ये साधनपदेन किं भवान् मन्यत इत्यर्थः। ननु एकैकस्या अपि शक्तेरप्रत्यक्षत्वात् 'समुदाय' ग्रहणं व्यर्थमत आह समुदायेति। नित्याऽनुमेयत्वादिति तत्त्वञ्चाऽतीन्द्रियत्वाद्बोध्यम्। ननु तण्डुलोदकदर्शनकाले पाकस्य भूतत्वाऽभावात्कथं लिट्प्रयोगोऽत

आह दृष्ट्वाऽपीति। साधनस्य तच्छक्त्याश्रयस्य। संरम्भरूपस्येति संरम्भः शक्तिस्तदाविष्टरूपस्येत्यर्थः। 'संरम्भ' शब्दोऽर्शं आद्यजन्तः। पपाचेति युक्तमिति पाठः। भाष्ये सीत्काराः फूत्काराश्चेति पाठः। क्रियाकृतप्रत्यक्षत्वेऽपीति अपिना साधनप्रत्यक्षत्वेऽपीत्यर्थः। इन्द्रियाऽगोचरसाधनेति तत्र क्रियाकृतविशेषरूपसीत्कारादिविशिष्टस्य संरब्धरूपस्य चेन्द्रियाऽगोचरत्वं बोध्यम्। अचित्तव्याक्षेपस्थले उत्तमाऽसिद्धाविष्टापत्तिं सूचयन् 'चित्त' व्याक्षेपे तदुदाहरणमाह भाष्ये सुप्तेति। जागरेऽमत्तत्वेऽपि पारोक्ष्यं दर्शयति अथ वेति। 'वैयाकरणानां शाकटायन' इत्यनेन तस्याऽमत्ततोक्ताऽन्यचित्तता च। भाष्ये वर्त्तमानकालमिति वर्त्तमानकालं वसित्वेत्यर्थः। भाष्ये मनस इति यद्यपि पातञ्जलानामन्तःकरणं व्यापकं, तथापि तत्परिणामविशेषो मनश्चिरस्थायि मध्यमपरिमाणं संकोचविकासशालि ज्ञानकारणमिति भावः। अत एव सदा न ज्ञानयौगपद्यं कदाचिद्यौगपद्यमपीति दिक्। जनपद इति कलिङ्गखण्डिकादिषु त्वया भुक्तमिति पृष्टे तत्कारणीभूतगमनप्रतिषेधादत्यन्ताऽपह्नवोऽत्रेति बोध्यम्। तस्य सोममिति तदंशभूतं सोममित्यर्थः। फलितमाह ऋत्विग्भूत्वेति। त्वथाऽयोग्यादिति दार्वदेशीयादिति शेषः। को मनुष्य इति यतोऽहं न प्रतिजग्राह अत इत्यादिः। परे तु 'मरुत्तस्त्वयि प्रहरिष्यति' इत्यग्निनोक्ते इन्द्रस्येदं वाक्यं, खण्डिकादिषु* भोजनवतः अयाज्य ऋत्विक्कर्मकृतवतोऽसतो दार्वजात्प्रतिग्रहीतुर्वा मनुष्यप्रहारो न मम तद्देशगमनस्यैवाऽभावात् ऋत्विक्त्वस्यैवाऽकरणाद् दार्वजतः प्रतिग्रहस्यैवाऽग्रहणान्मयि तस्य न प्रहारे सामर्थ्यमित्याहुः॥ ११५॥

———

* खण्डिका खाण्डववनम् इति सं०।

## लट् स्मे ( ३।२।११८ )

प्रथमे वार्त्तिके इति यद्यपि 'उपसञ्जात' विरोधाद्द्वितीयवार्त्तिके लक्षणा युक्ता तथाऽपि लक्ष्याऽनुरोधादग्रिमभाष्याच्चाऽत्रैव लक्षणेति भावः। तत्र लक्षणाऽऽश्रयणे वीजमाह तत्र स्मेति। भूतमात्रस्य विधानादिति आद्ये वार्त्तिके इति भावः। निषेधादिति 'अनद्यतन' लक्षणविशेषप्रतिपादने निषेधतात्पर्यादित्यन्वः। एकस्मिन् विषये 'लट्स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयविषये भूतमात्रविध्यद्यतननिषेधयोर्विरोधः। पूर्वोक्त इति आद्ये पञ्चसूत्रीलक्षणरूपः। मध्यमौ योगौ लक्ष्येते इति आद्यन्ताभ्यां पञ्चसूत्रीग्रहणेऽपि सूत्रत्रये 'भूतमात्रे' इति विशेषोक्तेर्मध्यमयोरेवैतत्फलमित्याशयेनेदमुक्तं ननाविति। नन्वोरिति च मध्यमौ योगौ इति प्रश्न इति, तत्र विनिगमकाऽभावादिति भावः। भाष्ये स्माद्यर्थमिति अतद्गुणसंविज्ञानो बहुव्रीहिरिति बोध्यम्। विशेषमपश्यन्निति अक्षरलाघवगौरवरूपं विनिगमकमित्यर्थः, अन्यथा फलविशेषस्य स्पष्टतया तदसंगतिः स्पष्टैव। अपरोक्षाऽनद्यतनावितीति 'अपरोक्षे च' इति सूत्रस्थमपरोक्षग्रहणमिति बोध्यम्। एवञ्च तन्निवृत्तिरिव 'अनद्यतन' इत्यस्याऽपि निवृत्तिर्भविष्यतीति निषेधवार्त्तिकं व्यर्थमित्याशयः। तन्निवृत्तौ यत्फलितं तदाह तेनेति। इत्यत्राऽनद्यतनेनेति 'मण्डूकप्लुत्या' इति भावः। ज्ञापकमुपपादयति यदि त्विति। द्विती यपक्षेऽपि वैयर्थ्यमुपपादयति भाष्ये अथ बुद्धिरिति। भूतमात्रे लटः 'स्म' 'पुरा' शब्दौ हेतू इत्यर्थः। निवर्त्येत इति 'लट् स्मे' इत्यत्र परोक्षाऽनद्यतनयोर्निवृत्त्या स भूतमात्रे सिद्धः। एवञ्च 'अपरोक्षे' इत्यस्याऽयमर्थः, उत्तरसूत्रद्वये 'परोक्षे' इति निवृत्तमिति। तेन तत्र 'अनद्यतनाऽनुवृत्तिर्भवति' इत्युत्तरवार्त्तिकं व्यर्थमेवेति भावः। प्रत्याख्यातुमाहेति प्रथमपक्ष इति शेषः। प्रथमपक्षे लाघवेन स

# संस्कृतगवेषणा ।

—:०:※:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सन्निधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण .व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अवका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंबन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तस्तर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

बालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

## उद्योतनियमः ।

—:*:०:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निः-सरिष्यति । भविष्यति मुद्राषट्कं वार्षिकं मूल्य-मस्य मुद्रणकर्मणि परिसमाप्ते । ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्ध-चतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति । अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति ।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस ।)

श्रीमते वायुपुत्राय नमः ।

# भाष्यप्रदीपोद्योतः ।

## महामहोपाध्यायनागेशभट्टविरचितः

—— :*:०:*: ——



द्विवेदोपाह्वेन

बालगोविन्दशास्त्रिणा वैद्येन

संशोधितः

प्रकाशितश्च ।

—:०:*:०:—

गोपालचन्द्र चक्रवर्ती द्वारा भारतधर्म प्रेस, काशीमें मुद्रित ।

# अभ्यर्थना ।

—**०**—

महोदयाः

अस्ति खलु विदितमेतद्यदधुना वाराणसेयानां विदुषां वैदुष्यम्प्रायः पाणिनिव्याकरणमधिष्ठायैव परिष्कारबलेन सर्वोपरि वरीवर्त्ति । व्याकरणञ्च तन्महर्षिभगवत्पतञ्जलि प्रणीतमहाभाष्यमन्तरेणाऽकिञ्चित्करम् । तच्च महाभाष्यमन्यर्थ गूढाऽभिप्रायमित्यालोच्य कैयटेन तदर्थबोधनाय प्रदीपो व्यधायि । ततः कालक्रमात् जनानां बुद्धिवैपुल्याऽभावात् परमकारुणिकेन महामहोपाध्यायनागेशभट्टेनोभयार्थद्योतकोद्योतो व्यधायि । किन्तु, अयमुद्योतोऽद्यावधि आपादचूडं न क्वापि मुद्रित इति महान् खेदः । केवलमादितोऽध्यायद्वयमुद्योतस्य 'बम्बई' नगरे मुद्रितम् । तृतीयाऽध्यायादारभ्याऽऽसमाप्ति मुद्रयितुमहं बद्धपरिकरः केवलं धाष्टर्यादेव सञ्जातोऽस्मि । तत्रभवतो नागेशभट्टविदुषः पुण्यप्रभाव एव मां तारयिष्यतीति मदीयो दृढविश्वासः ।

आदर्शपुस्तकञ्चैकमेव 'कथिदाय' विक्रमवत्सरलिखित मस्ति । एकमपरम्पुस्तकमद्याभ्यर्थनालेखकाले 'टीकमणि कालेज' संस्कृतपाठशालाया व्याकरणप्रधानाध्यापकेन श्रीमद्विद्वद्वरपूर्णचन्द्राचारिणा श्रीविद्वद्वरानन्तरामशास्त्रिणः सकाशादवाप्य प्रदत्तमिति, उभयोरपि विदुषोराजन्माहं ऋणी भविष्यामि । प्राप्तस्यास्य 'ख' संज्ञा भविष्यति । उद्योतस्यास्य सभाष्यस्य 'क' संज्ञकं पुस्तकं श्रीमद्विद्वद्वररामचन्द्रशर्मणा मम पित्रा संगृहीतन्तत्तु मदीयमेव । एताभ्यां मुद्रितेऽस्मिन्नुद्योते यदि क्वापि स्खलनं स्यात्तर्हि विद्वद्भिः क्षन्तव्यमिति विदुषां वशंवदः ।

बालगोविन्द वैद्यः । मार्गशीर्ष १५ ।

एव पक्षः परिग्राह्य इति बोधयितुमिति भावः। इदानीमिति। तत्पक्षस्यैव ज्ञापकतया सूत्रं समर्थयितुमित्यर्थः। मध्यमौ त्विति। 'परोक्ष' ग्रहणस्य 'अपरोक्ष' ग्रहणस्य च निवृत्त्या तत्सहचरित 'अनद्यतन' ग्रहणस्याऽपि निवृत्तेरिति भावः। भाष्ये एव-न्तर्हि ज्ञापयत्याचार्यः स्मलक्षणः पुरालक्षणश्चाऽनद्यतने इति। तत्र स्मलक्षण इदं ज्ञापकम्, पुरालक्षणे तु 'लुङ्' ग्रहणमिति विवेको बोध्यः। नन्वेवं 'ननु' योगेऽनद्यतने लङ्लिटौ स्याताम्, ताभ्यां येन नाप्राप्त्यभावेन तद्बाधाऽयोगादत आह ननाविति ॥ ११८ ॥

---

## ननौ पृष्टप्रतिवचने ( ३।२।१२० )

असमाप्तिविवक्षायां हेतुमाह तत्कृतस्य श्रमादेरिति। प्रत्या-ख्यानमिति। सूत्राऽऽरम्भ इष्टाऽसिद्ध्येति भावः। 'ननु' शब्दयोगे लुङ्लङ्लिटामनभिधानमाश्रयणीयमिति तात्पर्यम् ॥ १२० ॥

---

## पुरि लुङ् चाऽस्मे ( ३।२।१२२ )

पूर्वविप्रतिषेधेनेति। 'पुरि लुङ् चाऽस्मे' इत्यतः स्मे लडि-त्यतः पूर्व इति भावः। ननु 'अस्मे' इत्युक्ते 'स्म' योगे 'पुरि लुङ्' इत्यस्याऽप्राप्तेः कथं विप्रतिषेधोऽत आह ततश्चेति ॥ १२२ ॥

---

## वर्त्तमाने लट्। ( ३।२।१२३ )

ननु 'प्रवृत्तं' न च विरतमथ च न वर्त्तमानमिति विरुद्धमत आह इहेत्यादि। न च तद्विरतमिति। सर्वथा न समाप्तमित्यर्थः। क्रियारूपत्वाऽभावादिति। भूतभविष्य-द्वर्त्तमानव्यवहारविषयत्वस्वभावत्वात्तस्या इति भावः। विविध-

व्यवहारविषय एव हि 'साध्यत्वं' इत्यभिमानः। ननु विद्यमानकालसंबन्धित्वरूपं वर्त्तमानत्वमसाध्यस्यापि भवतीत्यतो भाष्ये भूतेत्यादि। तद्व्याचष्टे साध्यस्येति। अनित्यत्वात् वर्त्तमानप्रागभावप्रतियोगित्वात्। उत्पन्नस्याऽपीति। भावस्येति शेषः। तेन 'ध्वंस' व्यावृत्तिरिति केचित्। वस्तुतो ध्वंसस्याऽपि प्रलयेऽदर्शनरूपो नाशोऽस्त्येव, न ह्यभावनाशः प्रतियोगिरूप एवेति नियमः, अधिकरणरूपत्वादिति परे। प्रतिद्वन्द्व इति। प्रतियोगिसत्ताकाले तयोरसम्भवात्तद्विरोधिवर्त्तमानत्वमिति भावः। वर्त्तमानत्वाऽभाव इति। भूताऽऽदिविरोधिवर्त्तमानत्वाऽभाव इत्यर्थः। तादृशमेव वर्त्तमानत्वं सूत्रे विवक्षितम्, पूर्वं 'भूते' इत्युक्तेः, अग्रे च 'भविष्यति' इति वक्ष्यमाणत्वादिति भावः। क्रियारूपत्वाऽभावश्चेति। यतो भूतभविष्यद्विरोधिवर्त्तमानत्वाऽभावोऽतः क्रियात्वाऽभाव इत्यर्थः। तदुक्तम्—

'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका' इति।

भाष्ये आरम्भोऽत्रेति। कर्मणि घञ्, आरब्ध इत्यर्थः। अथ वाऽध्ययनस्यैवेति। भोजनादिकं विना तदनिर्वाहात्तदवयवत्वेनैव तस्या ग्रह इति भावः। व्यवधानमिवेति। अव्यवधायकोऽपि व्यवधानमिव प्राप्नोति, अनिवृत्तोऽपि निवृत्त इव दृश्यत इत्यर्थः। अन्तरालप्रवृत्तिभिः हासादिभिः। अविरामात् फलनिर्वृत्त्याविरामाऽभावात्। विच्छिन्नरूपोऽपि विच्छिन्न इव भासमानोऽपि। फलनिवृत्तेर्न निवृत्तते सर्वथा न निवर्त्तत इत्यर्थः। सर्वैवेति। तथा च नान्तरीयकत्वात्तासां न व्यवधायकत्वमिति भावः। पक्षान्तरमाह तदिति। तन्मध्यदृष्टा सर्वा तदवयवक्रियैवेत्यन्वयः। एवञ्च स्वाऽवयवक्रिया यथा स्वस्य न व्यवधायिकास्तथेमा अपीत्यर्थः। एवञ्चाऽत्र पक्षे 'भोजनादि' अप्यध्ययनशब्दार्थत्वेनाश्रितमिति तात्पर्यम्। ननु कथं तदवयवत्वेन

ग्रहोऽत आह सादृश्यादिति । तत्फलनिर्वाहकत्वेनेत्यर्थः । सति भेदे त्विति । तुरप्यर्थे । अत्यन्तभिन्नाया अपि क्रियाया मध्यपातितया तदङ्गत्वेन ग्रहात्स्वाङ्गं न व्यवधायकमिति भावः । भाष्ये नाऽवश्यमिति । किन्त्वर्थसत्त्वादपीत्यर्थः । ननु 'कालः' क्रियाऽधिकरणं न तु क्रियाऽत आह प्रसिद्धेति । वस्तुतोऽनवस्थाऽऽपत्त्या चिन्त्यमिदम् । भाष्ये 'क्रिया' पदेन तदधिकरणकालो लक्ष्यत इति वक्तुं युक्तम् । तिष्ठतेरिति । तत्तत्क्रियाविशिष्टतिष्ठतेरित्यर्थः । क्रियारूपत्वमिति । तत्तद्राजक्रियासमानाऽधिकरणपर्वतादिस्थित्यादेरित्यर्थः । यतः कालत्रययोगोऽतः क्रियारूपत्वमित्यर्थः । आत्मा द्रव्यम् । न विकल्पत इति । न स्वरूपेण भिन्न इत्यर्थः । विरूपाऽवयवक्रिया व्यापाराः प्रसिद्धभेदा न तु साध्यभेदा इत्यर्थः । स्वरूपाऽवयवक्रियास्तु गिरिस्थित्यादयो राजक्रियादेः साहचर्येण भिद्यन्त इत्यर्थः । साहचर्यमत्र कालघटितं बोध्यम् । तासामेवेति । अत्र यद्वक्तव्यं तदुक्तम् । क्रियाकारणत्वादिति । आधारतयेति भावः । क्वचित् क्रियाऽधिकरणत्वादित्येव पाठः । इदानीं क्षणभङ्गवादी सूत्रमाक्षिपतीत्याह अपर आह नास्तीति । वर्त्तमानकालक्रिया नास्तीत्यर्थः । एवञ्च क्षणभङ्गुरे पदार्थमात्रे क्रियाश्रयत्वाऽसम्भवात् क्रियायां भूतभविष्यत्प्रतिद्वन्द्विवर्त्तमानत्वाऽभावेन कालविभागाऽनवगतेः 'वर्त्तमाने लट्' इति सूत्रमसङ्गतमिति भावः । तद्ध्वनयन् व्याचष्टे निष्पन्नस्येति । रूपान्तरस्याऽभाव इति । प्रतिक्षणनश्वरत्वाद्वर्त्तमानक्रियाश्रयस्याऽभावेन सर्वथा वर्त्तमानत्वाऽभाव इति भावः । अतीताऽनागतानां तत्त्वादेव न वर्त्तमानत्वेन व्यवहारप्रयोजकता क्रियां प्रति द्रव्यस्य समवायिकारणतयोत्तरक्षणे क्रिया वाच्या, तत्तु न, उत्तरक्षणेऽन्यस्यैव भावादिति तात्पर्यम् । तदुपपादयति भाष्ये अपि चाऽत्रेत्यादिना । वर्त्तते चक्रमित्यादिवर्त्तमान-

प्रयोगो निरालम्ब इत्यर्थः। तदाह परिवर्त्तनेति। अत्र 'विचेष्टिता लोको नास्ति' इत्यनेन दृश्यस्य क्षणभंगुरता सूचिता। यद्यप्ययं श्लोकः 'क्रियाश्रयो नात्मा यतोऽयं कूटस्थोऽपरिणामीत्यर्थः, नाऽपि लोकदृश्यः पदार्थः यतो दृश्यश्चेष्टाश्रयः स्थिरो नास्ति प्रतिक्षणपरिणामित्वात्पदार्थानाम्', इति संसाराऽनित्यत्वाऽतिशयबोधकस्तथापि 'आपातार्थम्' आदाय क्षणभङ्गवादिना स्वसाधकत्वेनोपन्यस्तः। एवं यो वेत्तीति। यथाकथञ्चिज्ज्ञानातीत्यर्थः। 'अपि' द्योत्यमर्थमाह किम्पुनरिति। सर्वदा तथाभावनावानित्यर्थः। एवञ्च चक्रादेः क्रियाराहित्यज्ञानवानपि योगितुल्यः, अत्यन्ताऽस्थिरत्वस्य दृश्येषु ग्रहात्, आत्मन्यपरिणामित्वस्थिरत्वग्रहाश्चेत्युक्तं भवति। अविकृतमात्मतत्त्वम् अपरिणाम्यात्मतत्त्वम्। स हि तथा जडं भावयेत् तत्कारणतयाऽविकृतमात्मतत्त्वं प्रत्यक्षीकरोतीत्यन्वयः। अत्रैवाऽर्थे सम्मतिमाह तथा चेति। प्रकृतिपुरुषविवेकादेव हि तथासाक्षात्कार इति योगसांख्ययोः सिद्धान्तः। अथ पदार्थानां स्थिरत्वेऽपि वर्त्तमानकालाऽभावमुपपादयति भाष्ये मीमांसक इति। मन्यमानः आत्मानं विचारकं मन्यमान इत्यर्थः। सम्मतश्चेतीति। 'अर्थान्मेधाविनामेव' इति गम्यते। पृच्छतिस्म पप्रच्छ लट् स्मे। भाष्येऽतिक्रान्ते च न पतसीत्यन्वयः। काकपर्याय 'काकन' शब्दस्य 'काकन' इति संबोधनम्। सम्प्रति प्रयोगकाले। वर्त्तमानत्वाऽभावेऽपीति। क्रियाया वर्त्तमानत्वाऽभावेऽपि यदि 'पतसि' इति व्यवहारस्तदाऽयं सर्वो लोकः पततीति व्यवहारविषयः स्यादित्यर्थः। तदाह हिमवानपीत्यादि। भाष्यस्य व्यवहारः स्यादिति शेषः। अयं भावः, त्रिक्षणस्थायिन्या अपि क्रियाया अतिसूक्ष्मकालाऽवच्छिन्नत्वरूपदोषवशात् ज्ञानाऽसम्भवेनाऽज्ञातेन च व्यवहाराऽसम्भवोऽज्ञातेन च व्यवहारेऽतिप्रसङ्ग इति।

उक्तमेवाऽर्थं दाढर्यायाऽऽह अनागतमिति। एक एव क्षण उपलभ्यत इति। उपलम्भयोग्यो भवितुमर्हतीत्यर्थः। न चैकस्येति। एकक्षणवर्त्ती पदार्थगतः क्रियाविशेषो ज्ञानयोग्यः सम्भवतीत्यर्थः। ननु कालवाचकत्वात् 'सदा' इति भाष्यमत आह कालेति। भाष्ये सर्वत्रेत्यस्य काले इति शेषः। सर्वत्र गतिर्नास्तीति। अस्योपलब्धियोग्या नास्तीत्यर्थः। अनुपलब्धिप्रमाणाच्च 'तदभाव' निश्चय इति भावः। क्षणभङ्गवाद्येवाऽत्र वक्तेति तु न युक्तं, तस्य 'मेधाविसम्मत' इति विशेषणाऽनुपपत्तेः, 'यदि सम्प्रति' इत्यादेस्तन्मते उक्तिसम्भवाऽभावाच्च। इदानीं सिद्धान्तमाह क्रियाप्रवृत्ताविति भाष्ये। क्रियाऽऽरम्भे यो हेतुः प्रयोजकः फलं, तदर्थं यद्विचेष्टितं क्रियासमूहस्तदनुकूलत्वेन समीक्ष्य बुद्धिविषयीकृत्य बौद्धसमूहस्य बौद्धं वर्त्तमानत्वमादाय 'गच्छति' इति प्रयोगोपपत्तिरित्यर्थः। क्षणभङ्गवादे बुद्धेरप्येकस्या अभावादाह इहेति। कदाऽप्यवर्त्तमानस्य शशविषाणादितुल्यस्य भूतभविष्यत्वे अपि त्वत्सम्मते न सम्भवत इति 'गच्छति' इत्यबाधितप्रत्ययस्तत्सत्तायां मानमिति भावः। 'गच्छति' इति प्रत्ययोऽबाधित उत्पद्यत इति। सत्त्वं तावदवगम्यत इति। एतेनाऽवयवशोऽपि अप्रत्यक्षत्वं सूचितम्। अन्यथा 'अवयवगतस्य समूहे आरोप' इत्येव वदेत्। ननु अवयवानामभावे समूहोऽसम्भवी तत्राह तत्राऽनेकेति। बौद्धो वैकल्पिक एवाऽयं समूह इत्यर्थः, 'शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्प' इति पातञ्जलोक्तेः। समूहस्य वर्त्तमानत्वं तु प्रारब्धाऽपरिसमाप्तत्वमुक्तमेव। तदपि बौद्धमेव। तस्याऽनेकक्षणसमूहात्मकं तदात्मकत्वेन प्रसिद्धं क्रियाप्रबन्धरूपं तत्त्वे न च प्रसिद्धमविचारितरमणीयमेव बुद्ध्या विषयीकृत्यत्यर्थः। अन्यथा पूर्वं सर्वथा वर्त्तमानकालाऽभावस्योक्तत्वेन तमसाध्यैवेदृशोक्तेरसंगत्यापत्तेः। एवं वास्तववर्त्तमानक्रियाभावमङ्गीकृ-

त्याऽनुमितबौद्धसमूहरूपक्रियां तद्वर्त्तमानत्वञ्च बौद्धमाश्रित्य प्रयोगानुपपाद्येदानीं वास्तववर्त्तमानक्रियां तत्तत्क्षणवर्त्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते अपर आह अस्ति वर्त्तमानः काल इति। क्रियाणां त्रिक्षणाऽवस्थायित्वादिति भावः। आदित्यगतिवन्नोपलभ्यते। प्रत्यक्षेणेति शेषः। क्रियाप्रत्यक्षत्वाऽभिमानिनो यथाऽतिदूरत्ववशात्तद्गतिरनुमेया तथाऽतिसूक्ष्मकालाऽवच्छिन्नत्वादेकैकक्षणाऽवच्छिन्ना क्रियाऽप्यनुमेयैवेति भावः। ननु कार्य्येणोत्तरदेशसंयोगादिना एकैकक्षणवर्त्त्यतिसूक्ष्मवर्त्तमान क्रियायाः कथमनुमानमत आह भाष्ये अपि चेति। विसदाहे बालदाहवत्कारकसन्निपाते विकृतिः। एकैका क्रिया यद्यपि न लक्ष्यते तथापि त्रिभावा योगिनस्तां 'अस्ति' इति वेदयन्त इत्यर्थः। अनेन योगिप्रत्यक्षं प्रमाणं दर्शितम्। नन्वस्मदादिव्यवहारः कथमत आह सूक्ष्मो होति। समूहान्यथाऽनुपपत्तिः। 'वर्त्तमाने लट्' इति शास्त्रञ्च तदनुमापकमिति भावः। एकैकक्षणग्रहणे। एकैकक्षणस्य वर्त्तमानग्रहणेन ग्रहणे। तत्क्षणाऽच्छेदेन क्रियाविशेषलक्षणा विकृतिः प्रत्यक्षेण न लक्ष्यत इत्यक्षरार्थः। नन्वेकैकक्षणस्य सूक्ष्मत्वेऽपि समूहः प्रत्यक्षः स्यादत आह अनेकेति। एवञ्चाऽवयवरूपा समुदायरूपा च क्रियाऽनुमानगम्यैवेति तात्पर्यम्। अत्र पक्षेऽनुमितैकैकक्षणवृत्तिक्रियायां धात्वर्थसमूहरूपाऽऽरोपेण 'वर्त्तमान' प्रयोग इत्याशय इति दिक् ॥ १२३ ॥

इति श्रीशिवभट्टसुतनागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ॥ २ ॥

---

## लटः शतृशानचावप्रथमासमानाऽधिकरणे (३।२।१२४)

भाष्ये लस्येत्यादि। समानाऽधिकरणेनाऽप्रथमान्तेन, 'ल'

वाच्यस्य कारकस्याऽयोगादित्यर्थः। ननु 'पचन्तं देवदत्तं पश्य' इत्यादौ तत्सामानाऽधिकरण्यमस्त्येवेत्यत आह इहेति। गुणभूते इति। 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्तादिति भावः। इति क्रियेति। इत्यस्य क्रियाप्रधानत्वादित्यर्थः। क्रियान्तरयोगाऽभावादिति। एकत्र विशेषणत्वेनान्वितस्य कारकस्याऽन्यत्र तथाऽन्वयाऽयोगात्कर्तृत्वाद्यतिरिक्ताऽनभिहितशक्त्यन्तराऽऽवेशाऽभावेन नियमेन प्रथमान्तेनैव सामानाऽधिकरण्यादिति भावः। प्राधान्येनेति। 'सत्त्वप्रधानानि नामानि' इत्युक्तेः। लङादिवदिति। लङादिवाच्यकारकसमानाऽधिकरणवल्लड्वाच्यकारकसमानाऽधिकरणस्येत्यर्थः। अप्रथमान्तेन तदर्थेन। इत्यादि प्रसज्येतेति। 'शतरि' इव 'लङि' अपि लकाराऽर्थकर्तुः प्राधान्यं स्यादिति भावः। यद्यप्यन्तरङ्गा प्रथमा तथाऽपि प्रधानाऽनुरोधित्वेन बलवती द्वितीयैव स्यादित्यर्थः। कर्त्राद्यभिधानमिति। तदभिधानशक्तिरित्यर्थः। द्वितीयादीति द्वितीयाद्यन्तार्थेत्यर्थः। प्रतिपत्तुमित्यर्थ इति। 'लङ्' वाच्यस्याऽप्रथमान्तसामानाऽधिकरण्यं न भवति, 'लट्' वाच्यस्य भवति यत्तत्र किं कारणं प्रतिपत्तुं शक्यं, स्वभावाऽतिरिक्तं न किमपीति भाष्यार्थ इति भावः। ततश्च शत्रादिविषयलटोऽस्त्येव 'शतृ' विधायकशास्त्रबललब्धस्वभावादप्रथमासामानाऽधिकरण्यमिति न दोष इति तात्पर्यम्। ननु लस्य काऽपि प्रयोगाऽभावेन कथमीदृशस्वभावाऽवगतिरतः पक्षान्तरमाह भाष्ये अथ वेति। ननु 'यावदप्रथमासामानाऽधिकरण्यं न निर्णीतं तावदादेश एव न, आदेशे न चाऽनुमानम्,' इत्यन्योऽन्याऽऽश्रयग्रस्तमत आह सिद्धानामिति। नित्यानामित्यर्थः। प्रक्रियाऽर्थं विहितस्येति। अनेन प्रक्रियार्थं कल्पितानामबोधकत्वं दर्शयति। विषम उपन्यास इति। वदन्प्रष्टव्यः, किम्प्रत्यक्षेण बाधनिश्चयादनुमानेन

उत व्याप्तिग्रहणाऽभावाद्' इति । तत्राऽऽद्ये आह यद्यपीति । 'प्रत्यक्षस्तेनाऽग्नि' इत्यादिग्रन्थेनापि भाष्ये तत्र बाधनिश्चयाऽभावः प्रतिपाद्यत इति बोध्यम् । प्रत्यक्षेण तत्राऽभिसंबन्ध एव पुरुषेण कृतो गृहीतो न तु बाधः, प्रकृते तु विपरीतमित्यर्थात् । लकाराऽप्रयोगनिमित्तकत्वेनाऽन्यथासिद्धत्वादभावग्राहिणः प्रत्यक्षस्य बाध्यत्वमित्यन्वयः । सामान्यतो दृष्टेन कार्यकारणभिन्नलिङ्गकेन । न ह्यन्यथेति । एवञ्च 'शतृ' शास्त्रवैयर्थ्यरूपाऽनुकूलतर्कसहितमनुमानमन्यथासिद्धप्रत्यक्षात्प्रबलमिति भावः । रूपसहचारिणस्त्विति । शुक्लभास्वररूपव्यापकस्येत्यर्थः । तमस्तु न तद्रूपवत् । स्पर्शस्य उद्भुतस्येति द्रष्टव्यम् । तेन दीपप्रभायां स्पर्शाऽग्रहेऽपि अनेकदिक्करूपस्य युगपद्ग्रहणेऽपि न दोषः । व्याप्तिग्रहणाऽभावं समाधत्ते भाष्ये कस्यचिदिति । तद्व्याचष्टे न भूय इति । ननु 'लट्' अप्रथमान्तसामानाऽधिकरण्यवान्, तदनुवादेन विहिताऽऽदेशस्थानित्वादित्यनुमानम् । तत्र दृष्टान्ताऽभावेन कथं 'व्याप्ति' ग्रह इति चेन्न 'यः स्थानी स आदेशसमानधर्मा' इति सामान्यतो व्याप्त्यैव सहकारिविशेषबलाद्विशेषाऽनुमितिः । अत्राऽपि 'शतृ' विधायकशास्त्रमेवाऽनुकूलस्तर्क इत्याहुः । वृक्षपर्णयोर्जातित्वादेकवद्भावः स्यादत आह भाष्यकारेति । व्यक्तिप्राधान्यविवक्षणादि भावः । भाष्ये यदन्यत्प्रथमासमानाऽधिकरणादिति । तत्राऽवध्यवधिमतोः साजात्यादन्यत्किञ्चित्समानाऽधिकरणमेव गृह्यते । तेन 'अप्रथमान्तेन समानाऽधिकरणस्य 'लट्' इति फलति । यथाश्रुते तु 'कौर्वत' इत्यादौ दोषाऽऽपादनाऽसङ्गतिः स्पष्टैव । नन्वत्राऽपि 'कुर्वतो देवदत्तस्य' इत्यादिपदान्तरसामानाऽधिकरण्यमस्त्येवेत्यत आह कुर्वत इति । वृत्तिघटकाऽतिरिक्तविशेषाऽपेक्षमपि सापेक्षमिति भावः । पदान्तरेति

देवदत्तस्येत्यादीत्यर्थः। देवदत्ताऽऽदिना पदान्तरेणेति। प्रथमाऽन्तेनेति शेषः। पूर्वस्मिन्नपीति। समानाऽधिकरणसमासरूपम्। कुर्वद्भक्तिरित्यादि कुर्वत्तर इत्यादिश्च कुर्वद्भक्तौ 'पुंवत्कर्मधारय' इति पुंवत्।

ननु लक्षणान्तरे 'अपचत्कल्पं देवदत्त' इत्यादौ स्यादत आह लक्षणशेष इति। अन्तर्वर्त्तिसुपा प्रत्ययपरत्वेनैव सिद्धे किमुत्तरपदग्रहणेनेत्यत आह पृथगिति। भाष्ये आदेशनिमित्त इति। तस्मिन् हि प्रातिपदिकत्वे सुबन्तत्वे च तद्धितोत्पत्तेरिति भावः। सुप उत्तरपदनिमित्तत्वमुत्तरपदस्य च सुबन्तनिमित्तत्वं दर्शयति सत्युत्तरपदे इति। तिङादेशादिति। 'तिङ्' रूपादादेशादित्यर्थः। एवञ्च 'पच् ल्' इत्यत्र तिङो वाधित्वा सुपि समास उत्तरपदे शत्रादि तिङो वाधकमिति भावः। निमित्तवन्ताविति। 'उत्तरपद' रूपनिमित्तस्य सम्पन्नत्वादपवादत्वेन 'शतृशानचौ' एवेति भावः। ननु 'पचति' इत्यादौ प्रत्ययोत्तरपदत्वाभावात्कथमादेशप्रसक्तिरत आह अत्राऽपीति। 'सुब्' एव प्रत्यय इति भावः॥ १२४॥

---

## लक्षणहेत्वोः क्रियायाः (३।२।१२६)

भाष्ये क्रियाया गुणे इति। क्रियायाः कारके इत्यर्थः। कारकनिरूपितं यदा लक्षणत्वं धात्वर्थस्य तदर्थमिदं तदाह गुणशब्देनेति। यदा स्थानादिनेति। कथम् 'अयं मूत्रयति' इत्यादिप्रश्ने यदेदमुत्तरं तदा तया सा लक्ष्या भवतीति बोध्यम्। यदा त्विति। यदा क्रियया कारकं लक्ष्यते तदा तदर्थमिदमित्यर्थः। देवदत्तो लक्ष्यत इति। मूत्रणसमानकालिकस्थानक्रिययेत्यथः। गृह्यत इति। गुणशब्देनेत्यर्थः। अत्र पक्षेऽशुचित्वादिगुणस्येदं लक्षणं न तु क्रियाया इति भावः। अत्र पक्षे

'लक्षणहेत्वोः क्रियायाः' इति सूत्रे गुणे लक्ष्ये उपसंख्यानं कार्य-मित्यर्थः। भाष्ये कर्तुश्चेति। कर्तृलक्षणभूतयोः क्रिययोर्वाच-काभ्याम्पर्यायेणेत्यर्थः। सदादयश्चेति। प्रथमासमानाऽधिकर-णार्थमिदम्। वाग्रहणस्याऽयमिति। 'लटः शतृशानचौ' इति विभक्तसूत्रेऽनुवर्तमानवाग्रहणस्य 'सदादयश्च' इत्यादिवचन-समुदाय इत्यर्थः। ननु क्रिययोरेव लक्ष्यलक्षणभावे 'को देव-दत्त' इति प्रश्ने इदमुत्तरं न स्यादत आह स्थितिक्रियेति। सर्वनामपरामर्शे इति। यत्तद्रूपसर्वनामपरामृष्टदेवदत्तस्य लक्षण-मिति फलितम्। अन्यथा वचनान्तराऽऽरम्भेऽपि 'तिष्ठतेः' शत्र-नापत्तिः। न हि तद्वाच्या क्रिया देवदत्तस्य लक्षणं किन्तु तदुपलक्षितभूतक्रियेति बोध्यम्। समुच्चीयमानमिति। परस्पर लक्षणतामनापन्नं समुच्चीयमानं सत्कर्तृविशेषस्य लक्षणमि-त्यन्वयः। यथा चैतन्येति। तत्स्वरूपत्वात्पुरुषस्य यथा तत्र लक्षणत्वाऽऽरोपेण शब्दप्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः। भाष्ये इति वक्तव्यमेवेति। 'लक्षणहेत्वोः' इत्यने-नाऽसिद्धेः यथास्थितसूत्रन्यासे सूत्रे 'वा' ग्रहणाऽनुवृत्तेरभा-वाच्चेत्यभिमानः ॥ १२६ ॥

---

## तौ सत्। (३।२।१२७।)

प्रत्ययविधिरिति। 'सद्' इत्यस्य प्रत्ययस्य विधिरित्यर्थः। भाष्ये प्रकृतावेवेति। एवञ्च प्रत्ययविधौ 'शतृशानचौ' इत्यस्याऽन-न्वयाऽऽपत्त्या संज्ञाविधिरेवेति भावः। धर्म्माऽसंबद्धयोरपीति। 'लृटः सद्वा' इत्यादिविहितयोरित्यर्थः। ननु भूते शतृशान-चोर्विध्यदर्शनादाह वर्तमानसामीप्ये इति। अतिदेशादिति। तेन प्रत्ययवत्संज्ञाऽप्यतिदेशेनैव सिद्धा तस्या अपि वर्त्तमानाऽधि-कारे विहितत्वात्। 'लृटः सद्वा' इति वचनादेव भविष्यदर्थ-

योरपि सा सिद्धयेत्यर्थः । शतृशानचाविति । अस्य सत्संज्ञाविति शेषः । ननूक्तरीत्या 'सत्' संज्ञासिद्धिरत आह वर्त्तमानवदित्यादि । न तु संज्ञेति । अनधिकारादिति भावः । ननु 'लृटः सद्वा' इत्यनेन 'सत्' शब्देन विधानात्तद्विहितयोः सा सिद्धेत्यत आह तथा लृट इति । भाष्ये ब्राह्मणस्य यदयन्निति । यद्यपि 'पूरण' इति सूत्रे 'अत्राऽसामर्थ्यात्समासो न' इति भाष्ये उक्तं तथापि तत्रत्यसिद्धान्तोदाहरणस्य 'ब्राह्मणस्य द्रष्यन्' इत्यस्योपलक्षणमिदम् । सन्निहितस्यैवेति । सन्निहितगुणविशिष्टस्यैवेत्यर्थः, तादृशस्यैव तत्र बुद्धिस्थत्वादिति भावः । नाऽलमिति । वाच्यवृत्त्या तदर्थाऽप्रतीतेरिति तात्पर्यम् । शब्देनैवेति । योगविभागबोधनद्वारा बोध्यत इत्यर्थः । शब्दत इति भाष्ये । आद्यादित्वात्तृतीयान्तात्तसिरिति भावः । भाष्ये सदिति योगे इति । सदित्येव सूत्रे इत्यर्थः । योगाऽङ्गमिति । योगः सूत्रसमुदाय रूपाऽष्टाऽध्यायी तदङ्गसूत्रत्वेन तच्च योगविभागे सतीत्यर्थः । ननु 'स्थानि' निर्देशाऽभावात्प्रत्ययाऽधिकाराच्चाऽऽदेशत्वं कथं, प्रत्ययस्येति च कथं लब्धमित्यत आह पूर्वसूत्रे इति । 'प्रत्यय' प्रकरणाच्च 'प्रत्ययस्य' इति लब्धमिति भावः । अनुवर्त्तमान 'प्रत्यय' पदं षष्ठ्या विपरिणम्यत इति बोध्यम् । ननु 'धातोः' इत्यधिकारात्तृतीये धात्वधिकारविहितानामादेशेऽपि तव्यादीनामपि प्रसङ्गः कस्मान्नोक्तोऽत आह तृजादीनामिति । लोपविधानसामर्थ्यान्न भविष्यत इत्यनुषङ्गः । 'ण्वुल्' विधानन्त्वादेशप्रवृत्तये एव स्यात् न हि स क्वचित्प्रयोगे श्रूयत इत्यभिमानम् । नियमं साधयति भाष्ये योगविभागतश्चेति । ताविति । योगविभागेन यतः सत्संज्ञकं विहितमतो 'लृटः सद्वा' इति योगविभागेन नियम उपपद्यत इत्यर्थः । तद्व्याचष्टे एवन्तर्हीत्यादि । तावेवेति । तावित्यनेन पुनर्विहितौ 'सद्वा' इत्यनेन च

प्रक्रान्तत्वाऽविशेषात्सर्वेषामपि संज्ञा। नन्वेवमपि 'द्विषोऽमित्रे' इत्यादिविहित 'शतुः' संज्ञा न स्यादिति चेन्न 'लृटः सद्वा' इति ज्ञापकात्तच्छब्देन शतृत्वशानच्त्वाभ्यामेव परामर्शो न तु लस्थानिकत्वादिविशेषस्याऽप्याश्रयणमित्याशयात्। लट इवेति। पूर्वविहितशतृशानज्मात्राऽनुवादेन विकल्पोऽनेन विधीयत इत्यर्थः। एवञ्च लट्लृटोरुभयोरपि प्रथमासामानाऽधिककरण्ये आदेशविकल्पसिद्धिरिति भावः। एवञ्च यथान्यासेऽप्ययं विकल्पः प्रथमासामानाऽधिकरण्यविषय एवेति ध्वनितम्। लादेशेष्विति। 'वाऽसरूप' न्यायस्य अनादेशप्रत्ययविषयत्वादिति भावः। साधनाऽभिधानस्येष्टत्वादाह अनिष्टस्याऽपीति। निघ्नाना इत्यादाविति। अदुपदेशात्परत्वाऽभावादिति भावः॥ १२७॥

---

## तृन्।(३।२।१३५)

अताच्छील्यार्थमिति। अनुपसर्गस्येति विशेषं वक्तुमित्यन्ये। तृनभावे कथम्प्रशास्ते * त्यत आह तृजेवेति। नन्वेवम् 'प्रशासिता' इति स्यादत आह तृंस्तृचाविति। 'शंसिक्षदादिभ्य' इति हरदत्तोक्तपाठे तु वृद्धिनलोपौ दुर्लभौ। नन्वत्र गतिसमासे उभयथाऽप्यव्ययपूर्वपदप्रकृतिस्वर एवेति कथं स्वरे विशेषोऽत आह तादौ चेत्यादि। षुकि 'ति'प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वाद्गुणात्पूर्वमेव षुक् स्यादिति भावः। ननु नेषतेरिड्दुर्वारोऽत आह नेषतेस्त्विवति। त्विषेरिति। तथा च तत्राऽनुयोगात्सर्वशेष इति भावः। भाष्ये क्षत्तेति। द्वाराऽधिकृतो रथसूतश्चेत्याहुः॥ १३५॥

---

* प्रशास्ता शिविररक्षकश्च।

## ग्लाजिस्थश्च क्स्नुः ( ३ २ १३९ )

ननु न क्' द्वयमुपलभ्यतेऽत आह लक्ष्येति । तेनेति । निर्देशेनाऽसिद्धत्वं बाध्यत इत्यर्थः । तदभावादिति । असंहिताकृता, अर्द्धमात्राकालेन विच्छेदादवसानविषयत्वमिति भावः । ननु संहितायाा अविवक्षायां विसर्गोऽपि कथं तत्राऽपि संहिताऽधिकारादिति स्पष्टमष्टमे भाष्ये इति चेन्न, पूर्वेण संहिताया एवाऽवसानकार्यनिमित्तत्वादिति ॥ १३९ ॥

---

## शमित्यष्टाभ्यो घिनुण् ( ३।२।१४१ )

उच्चारणार्थत्वमिति । केवलोच्चारणार्थत्वमित्यर्थः । शमिनीतरेति । ननु ह्रस्वाऽभावे 'तसिलादिषु' इति पुंवत्वं युक्तमिति कथं दीर्घप्रयोग इति चेन्न, ताच्छीलिकानाम्प्रायेण रूढितुल्यताया भगवतोक्तत्वेन संज्ञात्वात् 'संज्ञापूरणयोश्च' इति निषेधादित्याहुः ॥ १४१ ॥

---

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट परिवादिव्याभाषासूयो वुञ् ( ३ २।१४६ )

जातौ बहुवचनमिति । तत्र बहुवचनस्य भगवता प्रत्याख्यानादेकव्यक्तिविषये जात्याश्रयणे फलाऽभावाच्चेदश्चिन्त्यम् । प्रयोगबहुत्वाश्रये 'बहुवचमम्' इति परे ॥ १४६ ॥

---

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । ( ३ २।१५० )

सकर्मकार्थमिति । 'अनुदात्तेतश्च' इति सूत्रे 'चलनशब्दार्थाद्'

इत्यतोऽकर्मकादित्यनुवर्त्तते। तत्त्वञ्च सोपसर्गत्वेनाऽन्तर्भावितण्यर्थत्वेन वेति बोध्यम्। सूददीपेति युज् निषेधकम्॥ १५०॥

---

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। (३।२।१५८)

ननु 'अतोदीर्घ' इत्यत्र तिङीत्यनुवृत्त्या कथमत्र दीर्घ इत्यत आह तुरुस्तु इति। अत एव 'ज्ञाजनोर्जा' इति दीर्घविधानस्य 'अङ्गवृत्त' परिभाषाज्ञापकत्वं संगच्छते। प्रयोजनाऽभावाद्वेति। नेत्संज्ञेति शेषः। उभयत्रैकादेश इति। लित्स्वरे प्रत्ययस्वरे वा कृते उकारेण 'गुण' रूपे एकादेशे इत्यर्थः। एवञ्चेत्त्वे लकारोच्चारणवैयर्थ्येन सामर्थ्यान्नेत्त्वमिति भावः। नन्वेवमपि 'श्रद्धालुः' इति स्यादत आह शद्धालुशब्दस्याऽपीति। सिद्धिरिति शेषः। धेट इति। करणस्य शेषत्वविवक्षायां षष्ठी। तस्य च भौवादिकत्वात् 'श्लोः' अभावेन द्वित्वाऽभाव इति भावः। शिदाश्रय इति। शवाश्रय इति भावः। अथ वेति। संज्ञापूर्वकतया श्लोरभावेन द्वित्वं नेत्यर्थः। द्वित्वन्तु न संज्ञा पूर्वकं विधेयकोटौ संज्ञापूर्वकस्यैव तेनाऽनित्यत्वबोधनादित्याहुः। भाष्याऽनुक्तत्वेन 'संज्ञापूर्वक' इत्यस्याऽप्रामाणिकत्वे तु इदश्चिन्त्यम्। परे तु अजव्यथिभ्यामिवाऽत्राऽपि 'श्रद्धा' इति समुदायात्प्रत्यय इति न काचिच्छंकेत्याहुः। दयेर्यङः लुक् नास्त्यनभिधानादिति बोध्यम्॥ १५८॥

---

## आदृगमहनजनः किकिनौ लिट् च (३।२।१७१)

ऋकारगुणनिषेधार्थादिति। 'ऋच्छे' धातोः किकिनोर्गुणनिषेधाऽनिषेधयोः फले विशेषाऽभावः। 'आरिः' इति रूपमेव गुणे, तन्निषेधेऽपि 'अत आदेः' इति दीर्घे यणि च तदेवेति

भावः। ऋकारनिर्देशेति। दीर्घग्रहणेत्यर्थः। 'जगुरिः' इत्यादौ कित्त्वाद्गुणाऽभावे ओष्ठ्यपूर्वत्वाऽभावेऽपि छान्दसत्वादुत्वम्। भाष्यकारवचनेति। स्रंसादिबहुसहचरितस्यैव 'पतेः' तत्र ग्रहणमित्यन्यविकरणस्य तदभावः। यद्वा प्रसिद्धस्य 'पतेः' ग्रहणं न दैवादिकस्य, तस्य चेदं रूपम्॥ १७१॥

---

## अन्येभ्योऽपि दृश्यते (३।२।१७८)

ग्रावस्तु इति। विद्युतोऽप्युपलक्षणम्। तत्र कृते इति। प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वाद्दीर्घत्वे कृत इत्यर्थः। ननु दीर्घत्वं न स्यादित्ययुक्तमस्यानुवादत्वेन विधिलिङोऽसम्भवादत आह सम्भावने इति। दीर्घत्वं सम्भवेदिति नेत्यर्थः। यद्यपि दीर्घवचनसामर्थ्याल्लक्षयेलक्षणस्येति न्यायबाधेन पुनर्दीर्घप्रवृत्तिरेव वक्तुं युक्ता, तथापीष्ट्यनुरोधात्सम्प्रसारणाऽभाव एव भाष्यकृतोक्तः। भाष्ये कार्यकृतत्वादिति। विकारकृतलक्ष्यभेदस्तु नाऽत्र न्याये आश्रीयते एतद्भाष्यप्रामाण्यात्। "विप्रच्छ्योर्यत्र वार्तिके सूत्रेणैव क्विपि सिद्धे दीर्घत्वार्थमेव ग्रहणमिति बोध्यम्। चेन 'दीर्घ' समुच्चये विद्युदादेरपि स्यात्, असमुच्चये 'जुहूः' न सिद्ध्येदत आह दीर्घे इति। द्युतिगमिभ्यामन्वये वैयधिकरण्यापत्तिभिया ताभ्यामसंबन्धो दीर्घस्येत्यर्थः। भाष्ये दीर्यतेर्वेति। एतद्भाष्यप्रामाण्यादेव 'दृ' धातुर्दिवादावपि बोध्यः। जीर्यतेर्वेति। अत्र पक्षे उत्वं चेन विधेयम्। दधातेर्वेति 'घुमास्था' इतीत्वम्। 'ईत्वमवकाएदौ' इति वचनन्तु भगवता प्रत्याख्यास्यते। वस्तुतोऽस्मात् 'क्विप्' एव नेतीदमेकदेश्युक्तिरिति बोध्यम्। वस्तुतो 'दृशि' समुच्चेयमपूर्वमीत्वम्भगवदभिमतम्पूर्वत्र पक्षेऽपूर्वोत्ववदिति बोध्यम्॥ १७८॥

---

## मतिबुद्धिपूजार्थेभ्यश्च ( ३।२ १८८ )

प्रत्ययविधानादिति। तेन हि विधेयविषयेऽयं न्यायो नाऽनुवाद्यविषय इति ज्ञाप्यते। कालस्त्वनुवाद्य इति भावः। तेन 'पूजितो यः सुराऽसुरैः' इत्यपि सिद्धम्। भाष्ये शीलित* इत्यादि। अनुक्तसमुच्चयार्थेन चेनैतेषां संग्रह इति भावः। कष्टम्भविष्यतीति। कषिष्यतीत्यर्थे 'कष्ट' शब्द इत्यर्थः पूर्ववत्। शीलिताद्युद्यतान्तवद्वर्त्तमाने इत्यर्थः। तदाह न म्रियन्त इति ॥ १८८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य द्वितीयपादे तृतीयमाह्निकम्। पादश्चाऽयं द्वितीयः समाप्तः।३।२।

---

तृतीयः पादः।

## उणादयो बहुलम् ( ३।३।१। )

शास्त्रान्तरेति। व्याकरणान्तरेत्यर्थः। साधुत्वेति। वर्त्तमानकाले तत्त्वार्थमिति भावः। प्रकृतेरित्यस्य व्याख्यानमननुगुणमत आह जातान्विति। ननु 'तनु' शब्दस्य प्रकृतेरिति विशेषणतया कथं समासोऽत आह तनुशब्द इति। तथा च गमकत्वात्समास इति भावः। तानवमिति। व्याकरणान्तरे तासामल्पत्वं दृष्ट्वेत्यर्थः। बाहुलकमिति। 'बहूनर्थान् लाति' इत्यर्थकबहुलशब्दाद्भावे वुञा सिद्धमिति बोध्यम्। बहवोऽर्थाश्च प्रवृत्तिनिमित्तादयो वृद्धैरुक्ताः। बह्वर्थादानमिति। बह्वर्थग्रहणरूपं प्रवृत्तिनिमित्तमित्यर्थः।

---

* अत्र कारिकायां 'आकृष्ट' इति पाठः, कौमुद्यान्तु 'आक्रुष्ट' इति पाठः।

तेनाऽपठिताभ्य इति । व्याकरणाऽन्तरेऽपठिताभ्य इत्यर्थः । भाष्ये उणादयो दृश्यन्त इत्यादेर्व्याकरणाऽन्तर इति शेषः । तदाह हृषेरुलजित्यादि । प्रायेण समुच्चयनमिति । व्याकरणाऽन्तर इत्यर्थः ।

ननु स्वतन्त्राणामृषीणामेवं न्यूनं शास्त्रं कृतमिति पर्यनुयोगोऽयुक्तोऽत आह तावन्त्येव भवन्त्विवति प्रश्न इति । ननु प्रकृतीनां निर्देशोऽत्रेत्यादि त्वया केन मानेन ज्ञातमिति भाष्याक्षराऽर्थः । तदिति । नैगमरूढिभवमित्यर्थः । जातावेकवचनमिति । 'साधव' इत्यनेनाऽन्वयः । ते सुष्ठिति पाठस्तु सम्यगेव । तस्य चाऽशेषेण संग्रहोऽशक्यः । तस्य साधुत्वञ्च सर्वसम्मतम् । अतो ज्ञायते 'प्रकृतेस्तनुदृष्ट्रेरित्यादि' इति भाष्यार्थः । सुसाधवः कथं स्युरिति । भाष्यस्य अतो बाहुलमिति शेषः । ते पाणिनिना बोधितसाधुत्वकाः कथं स्युरित्यर्थः । पाणिनिना बोधितसाधुत्वमेव सुसाधुत्वं, सम्प्रति प्रयोगार्हत्वात् तदाह अपरिपूर्णानामिति । सर्वाभ्यः प्रकृतिभ्यः सर्वप्रत्ययानां तत्तद्रूपेण विधानन्तु ब्रह्मणाऽपि दुरुपपादमिति भावः । ननु तेषामेवं व्युत्पादनं कैर्वैयाकरणैः कृतमित्याऽऽशंक्याह भाष्ये नाम चेत्यादि । तद्व्याचष्टे नाम खल्वपीति । 'नाम धातुजम्' इत्येवमाहुर्नैरुक्ता इत्यक्षरार्थः । तदाह अन्यैरित्यादिना । पाणिनेस्तु 'तानि अव्युत्पन्नान्येव' इति भावः । इदञ्च 'आग्नेयीनी' इति सूत्रे भाष्ये स्पष्टम् । एवञ्च 'कृवापा' इत्याद्युणादिसूत्राणि शाकटायनस्येति सूचितम् । 'धातुजं नाम' इति निरुक्ते आह निरुक्तकारः 'शाकटायनश्च स्वकृते व्याकरणे आह धातुजं नाम' इति भाष्येऽन्वयः । पदार्थ इत्यत्र 'अर्थ' शब्दः प्रयोजनवाचीत्याह अर्थः प्रयोजनमिति । विशेषश्चाऽसाविति । उक्तप्रकृतिप्रत्ययादेर्यन्न समुत्थितम्, विशि-

ष्टया उक्तायाः प्रकृतेरुक्तप्रत्ययोत्पादनेन न व्युत्पादितमित्यर्थः। 'संज्ञासु धातुरूपाणि' इत्यवतारयति न सर्वत्रेत्यादि। संज्ञासु प्रसिद्धसंज्ञाशब्देषु ॥ १ ॥

---

## भविष्यति गम्यादयश्च ( ३।३।३ )

विशेष इति। सत्यपि वास्तवे विशेषे तस्याऽविवक्षितत्वात्सामान्यस्यैव विवक्षामाश्रित्य तदाश्रयो णिनिः। अनद्यतनाख्यस्तु विशेषः पश्चात् 'श्वः' शब्दमहिम्ना गम्यत इति भावः। विशेषविवक्षायामिति। प्रथमत एव विशेषविवक्षायामित्यर्थः। अपवादेति। लृटो हि द्वावपवादौ णिनिर्लुट् च। नन्वेवं 'श्वो गमिष्यति' इत्यादिप्रयोगाऽनापत्तिर्णिनिना बाधादत आह वाऽसरूपेति। सामान्यविवक्षायामिति भावः। भाष्ये पुरा पचतीत्यनपशब्दत्वायेति। भविष्यत्येवाऽनपशब्दत्वं यथा स्याद्भूते तु नेत्येतदर्थमित्यर्थस्तदाह सतीति। भविष्यद्भूतयोरसाधुत्वप्राप्तौ 'भविष्यति' एवाऽनेन साधुत्वं क्रियते न तु भूते। वर्त्तमानकाले साधुत्वाऽभावे तु न मानम्भाष्यादलाभात्, कालस्याऽनुवाद्यतया 'तक्रकौण्डिन्य' न्यायप्राप्तेश्च। 'भविष्यत्कालेन वर्त्तमानकालस्य बाधनाद्' इति कैयटश्चिन्त्यः। भूतेऽपीति। 'भविष्यत्' पदाऽभावे 'यावद्' इति सूत्रे यत्र विहितो लट् ततोऽन्यत्रापि यथा स्यादित्यर्थः स्यात्। एवञ्च भूतेऽपि साधुत्वं स्यादिति भावः। दूषणान्तरमाह शब्दोपात्तेति। अनुवाद्यविषयये 'तक्रकौण्डिन्य' न्यायाऽभावादिदं चिन्त्यम् ॥ ३ ॥

---

## यावत्पुरानिपातयोर्लट् ( ३।३।४ )

यावत्पुरादिष्विति भाष्ये। आदिना इत आरभ्य तुमुन्सूत्र-

पर्यन्तसूत्रसन्दर्भसंग्रहः। लडित्येतदनुवर्त्तिष्यत इति। इत्यादि-सूत्रसन्दर्भोपलक्षणमिदम् ॥ ४ ॥

---

## लिप्स्यमानसिद्धौ च (३।३ ७)

भाष्ये न लिप्स्यमानसिद्धिरपि लिप्सैवेति। लिप्साव्याप्यैवे-त्यर्थः। एवञ्च लिप्सायास्तत्राऽपि गम्यमानत्वमस्त्येवेत्याशयः। सिद्धिरहितायामिति। भवानद्य ब्राह्मणानामंत्रयिष्यतीत्यादौ। सिद्धिविषयोदाहरणन्तु 'यो भक्तं ददाति स स्वर्गं गच्छति, इत्यादौ ॥ ७ ॥

---

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्। (३।३।१०)

भाष्ये इत्यत्र षष्ठ्या इति। अत्र सूत्रे 'अकस्य भविष्यति' इत्यन्वाख्यानवार्त्तिके चेत्यर्थः। ननु सामान्यण्वुल्यैवाऽयं निषेधोऽस्त्वत आह सतीति। तदनुवादेन विहितो हि तदर्थको भवतीत्यर्थः। भाष्ये य एवाऽसाविति। भविष्यत्क्रियावाचक-प्रकृतिकत्वमेव 'ण्वुलि' भविष्यत्त्वमिति भावः। धातुसंबन्ध इति लप्स्यन्त ❀ इति। धात्वर्थसंवन्धोऽत्रेति भावः। न च 'धातु-संवन्ध' इत्यनेनाऽपि कालाऽन्तरे प्रत्यया विधीयन्त इत्यस्यापि भविष्यत्कालत्वमस्त्येवेति वाच्यं 'धातुसंवन्ध' इत्यादिना तत्प्रत्या-ख्यानप्रकारस्मारणेनाऽदोषात्। 'याजका' इतस्य तथा व्यवहारि-ष्यमाण इत्यर्थात्। तदाह याजकत्वस्यैवेति। तद्व्यवहारस्यैवेत्यर्थः। भाष्ये यस्तर्हीति। तत्र लक्षणायां न प्रमाणमिति, तत्र शब्दार्थ एव भविष्यत्वमिति भावः। तत्राऽपि 'प्रकरणाल्लक्षणा' इत्युत्तरम्। संवन्धशब्देन प्रकरणमुच्यत इत्याह स च तावदिति। भावि-याजकत्वादिकमारोप्येति। तद्व्यवहारमित्यर्थः। 'ओदनं भोजको

❀ 'लप्स्यन्त' इत्यस्य 'याजकाः' कर्म।

व्रजाति' इत्यादौ च भविष्यत्त्वेनैव धात्वर्थप्रतीतेर्निषेधसिद्धिरिति भावः। कर्त्ता व्रजतीति। करिष्यामीति व्रजतीत्यर्थः ॥१०॥

---

## भाववचनाश्च। ( ३।३।११। )

ज्ञापकेनेति। यद्यपि तुम् लृडर्थो भावोऽसत्त्वभूतो, घञादिवाच्यस्तु सत्त्वभूत इति 'तुमर्थे सेसे' इति सूत्रे भाष्यकैमटयोरुक्तत्वेन तेषां कथं 'तुमा' 'लृटा' वा बाधस्तथाऽप्यवान्तरविशेषाऽविवक्षया भाष्यं बोध्यम्। एकदेशयुक्तिर्वेदम्भाष्यम्। यथा विहिता इति। सादृश्यद्योतकत्वान्नाऽव्ययीभावः। लोकप्रसिद्धमिति। यथा विधानं विहितानामेव तथा वाचकत्वमिति भावः॥ ११॥

---

## अण् कर्मणि च। ( ३।३।१२। )

प्रतिप्रसवस्य लाघवादिति। काण्डलावादौ 'वाऽसरूपेण' एवुला बाधितस्याऽप्यणः प्राप्त्या तृजादयो वाऽसरूपेण न भवन्तीति निषेधनिवृत्तिमात्रेण प्रतिप्रसवत्वं सिद्धाऽनुवादेन च तन्निषेधनिवृत्तिः। अत एवाऽपूर्वविध्यपेक्षया लाघवम्। अपवाद 'क' आदिविषये तु परत्वाण्एवुलेव स्यान्नत्वण्। न च परत्वात्कादीनामपि बाधकः, अपूर्वविधित्वाऽऽपत्तेरिति भावः। ततश्चेति। अण्वचनो वाचको भवतीत्यर्थे 'कर्मणि' उपपदे एव तस्य वाचकत्वमिति भावः। कर्ममात्रेति। एवञ्च तत्सामर्थ्यात्परत्वेनाऽपवादकादिविषयेऽपि प्रतिप्रसवविधित्वमस्येति भावः। ननु क्रियार्थोपपदे विधानाऽर्थं 'अण्' इत्येवाऽस्तु 'कर्म' ग्रहणं व्यर्थं केवलकर्मोपपदे सामान्यसूत्रेण 'कर्मण्यण्' इत्यनेनैव सिद्धेरत आह वचनन्त्विवति। कर्मग्रहणन्त्वित्यर्थः। भविष्यति काले क्रियार्थोपपदे सत्यपि 'कंबलदाय' इत्यादौ कादि-

बाधनार्थमेव स्यादिति भावः। भाष्ये चेनैवेति। उपपदसंज्ञयोरपि समुच्चय इति भावः। युक्त्यन्तरमाह प्रत्येकञ्चेति। तद्व्याचष्टे कर्मणीति॥ १२॥

---

## लृट् शेषे च। (३।३।१३।)

क्रियायामिति। तन्निवृत्त्यैवोभयत्र सिद्धिरिति भावः। ण्वुला बाधितत्वादिति। वाऽसरूपन्यायाऽभावस्य ज्ञापनात्। 'वाऽसरूपन्यायेन लृट्' इति हरदत्तस्तु चिन्त्य एव। शेषग्रहणादिति। तत्सामर्थ्याद्योगविभाग इति भावः सूत्रपाठस्तु 'च' रहित इति तात्पर्यम्। अन्यथा 'शेष' वचनं क्रियार्थक्रियायां प्रतिपदविध्यर्थमिति भाष्याऽसङ्गतिः। चकारसत्त्वे हि तस्याऽयमर्थो, न 'शेष' ग्रहणस्येति स्पष्टमेव। ननु तत्सामर्थ्यात्क्रियोपपदेनेत्येव कल्पना स्यादिति मत्वा शंकते साधीय इत्यादि। भाष्ये निर्भज्यते विभज्यत इत्यर्थः। अक्रियाऽर्थोपपदत्वादिति। क्रियाऽर्थोपपदभिन्नोपपदार्थकत्वादिति। स्वाऽऽशयम्प्रकटयति एवं तर्हीति। 'च' घटितः पाठः कर्त्तव्य इति भावः। वार्त्तिककारस्येति। तेन वार्त्तिककृत्कृतोऽयं 'च' शब्दघटितो न्यास इति सूचितम्। चकारम् वार्त्तिककृदुक्तम्॥ १३॥

---

## लृटः सद्वा। (३।३।१४।)

सूत्रोपात्तानामिति। इदश्च वृत्त्यादिव्यवहारात्प्रयोगबलाच्चाऽवसेयम्॥ १४॥

---

## अनद्यतने लुट्। (३।३।१५।)

अनद्यतनेऽपीति। 'लृट् शेष' इति सूत्रेण केवलं भविष्यति

ज्ञापकेन अनद्यतने भविष्यतीत्यर्थः। तत्राऽन्यतरनिर्देशेऽन्यतरस्मिन्न स्यादत आह तन्त्रेणेति। एकशेषेणेति। विभक्त्यन्तैकशेषेणेत्यर्थः। एतच्च ज्ञापकं 'सद्' विषये लृट एवेति। 'तिङ्' विषयलृटोऽनद्यतनेऽसाधुत्वमेवेति केचित्। सामान्यत एव ज्ञापकमित्यन्ये। भाष्ये परिदेवनम् अनुशोचनम्। श्वस्तनीति। लुटः संज्ञा। भविष्यन्त्यर्थे लृडर्थे, भविष्यत्सामान्य इत्यर्थः। यैवमिति विलम्बितम्। अनभियुक्तः अभ्यासहीनः। अनद्यतनविषयमेतत्प्रयोगद्वयम्॥ १५॥

---

## पदरुजविशस्पृशो घञ्। (३।३।१६)

स्पर्शो नामेत्युदाहरणम्। अन्यत्र व्याध्यतिरिक्ते॥ १६॥

---

## सृ स्थिरे। (३।३।१७।)

कालान्तरस्य प्रापक इति। प्राप्तिमानित्यर्थः, कालान्तरस्थायीति यावत्। अस्थिराऽर्थमिति। 'विसारो मत्स्य' इत्यत्रैकदेशस्थस्य कालान्तराऽप्राप्त्याऽस्थिरत्वम्। वलं दृढोंऽशः, सारो वलमित्यपि शरीरे दृढशुक्रांऽशस्यैव वलपदपदार्थत्वादुपपन्नम्। न्यायस्याऽपि दृढार्थत्वादेव तत्राऽपि 'सार' शब्दः सिद्धः। एवं श्रेष्ठेऽपि। 'खदिरसारादौ' कैयटोक्तस्थिरत्वाऽभावश्चिन्त्यः। तस्मात् सूत्रस्यैव विषयपरिगणनमिदं, त्रिष्वेकरूपाऽस्थिरत्वस्य कैयटोक्तस्थिरत्वप्रतिद्वन्द्विनो निरूपयितुमशक्यत्वाच्चेत्यन्ये॥ १७॥

---

## भावे (३।३।१८।)

ततश्च शब्देनेति। 'भाव' इति शब्देनेत्यर्थः। योऽर्थः सिद्धा

ऽवस्थः। नन्वेवं 'स्त्रियां क्तिन्' इति सूत्राऽसङ्गतिरत आह स्त्रियां भाव इति। नन्वेवमपि 'नपुंसके भावे' इत्यसङ्गतं स्यात् तत्राऽर्थान्तराऽनुवृत्त्यभावादत आह एवमिति। कर्त्तरीति। 'कर्त्तरि कृत्' इत्यनेन लब्ध इत्यर्थः। लिङ्गसंख्ययोर्नान्तरीयकत्वमुपपादयति सत्त्वेति। प्रातिपदिकमात्रं निर्दिश्यतामिति वदन्तम्प्रत्याह शब्देति। 'न केवला प्रकृतिः, इति निषेधादिति भावः। भाष्ये कयाचिद्विभक्त्येति। संख्ययेत्यर्थः। बिनाऽर्थे इति। एवञ्च यद्विना यन्न भवति तन्नाऽन्तरीयकमित्यर्थः। भाष्यकारवचनप्रामाण्याद्वेति। 'वा' शब्दो हेतौ, ततो हेतोः पृषोदरादित्वमित्यर्थः। नलोपाऽभाव इति। निषेधाऽर्थकोऽननुबन्धको 'न' शब्दो नास्त्येवेति भावः। ननु कंटकस्य पुंस्त्वात् 'कंटकानि' इत्यनुपपन्नमत आह कंटकशब्दश्चेति। अर्द्धर्चादित्वादिति भावः। प्रयोगमूलत्वादिति। अनुवाद्यगतत्वादविवक्षेति तत्त्वम्। न ह्यत्रेति। भाष्यस्याऽत्राऽनुवादे इत्यर्थः। किञ्चिदधिकं वक्तुं विवक्षायामपि न दोष इत्याह अथ वेति। भाष्ये 'क्तस्त्योः' दृष्टान्तार्थ ग्रहणं, घञ् समभिव्याहारे साध्यत्वेन भासमानं भुवोऽर्थ इति तस्य सामान्यवाचित्वम्। भिन्नलिङ्गेति। पाकः पक्तिः पचनमित्येवमिति भावः। भिन्नलिङ्गसंख्याऽनुगतेषु तद्विशिष्टेषु सामान्यं सत्त्वभावरूपसिद्धत्वाऽऽख्यम्। तच्चैकं पुंस्त्वाऽनुगतश्चेति। अतएव 'पक्तिर्भाव' इत्याद्युपपद्यते। धर्मपरस्याऽपि धर्मधर्मिणोरभेदात्सामानाऽधिकरण्यम्। तदाश्रित्येति। एवञ्च लिङ्गसंख्ययोर्विवक्षायामपि न दोषः। न चैवं 'पक्तिः' इत्यादौ पुंस्त्वापत्तिः, तादृशविशेषगतसामान्यस्य 'भाव' शब्दवाच्यस्य सिद्धत्वरूपस्य पुंस्त्वैकत्वयोः सत्त्वेऽपि तदाश्रयविशेषस्य नानालिङ्गत्वात्स्त्रीत्वाद्युपपत्तिरिति भावः। सामान्यमिति। तद्गतसिद्धत्वाऽऽख्यो धर्म इत्यर्थः। विशेषा इति। तदाश्रया व्यक्तय इत्यर्थः।

ताश्च 'भाव' विहितकृत्प्रत्ययान्तवाच्या अनेकलिङ्गा इति भावः। कर्त्रादिभेदादिति। स्त्र्यादिभेदादित्यपि बोध्यम्। क्वचित्तु कैयटे तथैव पाठः। सामान्याऽनुगत इति। सिद्धत्वरूपसामान्याऽनुगत इत्यर्थः। स विधिरिति। प्रकार इत्यर्थः। यथैकस्यैवाऽऽचार्यत्वं मातुलत्वं संबन्धिभेदात्, तथैकस्मिन्नेव पाकादिषु साध्यत्व विशिष्टतत्तत्क्रियात्वरूपविशेषरूपता, 'भाव' शब्दवाच्यं सामान्यञ्चेत्यर्थः। तच्च तत्र यथा 'निरूपक' भेदाद्भिन्नं एवम्प्रकृतेऽपि वाचकभेदात्। 'कारक' निरूपितं साध्यत्वं क्रिया' निरूपितञ्च सिद्धत्वमिति बोध्यम्। वाच्यत्वेनेति। अनेकार्थत्वाद्धातूनां सिद्धत्वमपि घञन्त 'भू' धातोरर्थ इति भावः। यत्सामान्यमिति। साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषसत्त्वेऽपि यत्सिद्धत्वाऽऽख्यं सामान्यं पचाद्यर्थगतं घञन्तभवतिवाच्यं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः। न च तस्यैकत्वात्पुंस्त्वाच्च 'चिकीर्षा' इत्यादौ टावादि न स्यादिति वाच्यं, तस्य भावस्य सिद्धत्वरूपस्यैकत्वपुंस्त्वविशिष्टस्य विशेषणत्वेन लिङ्गाद्यनियामकत्वात्। विशेषणत्वेन भासताऽपि तेन स्वाऽऽश्रयस्य लिङ्गाद्ययोग्यताऽपनीयत इति न दोषः। सत्त्वरूपतामिति। एतच्च सिद्धत्वसाध्यत्वरूपोभयधर्मविशिष्टो धात्वर्थः पाकादिपदार्थ इति भावः। आख्यातशब्दे पचतीत्यादौ। भागाभ्यां प्रकृतिप्रत्ययाभ्याम्। साध्यसाधने क्रियाकारके बोध्येते इत्यर्थः॥ १८॥

---

## अकर्त्तरि च कारके संज्ञायाम्। (३।३।१९)

विधिप्रतिषेधयोरिति। एकविषयत्वे विकल्पाऽऽपत्तेस्तदितरकारकविषयताविधेरिति भावः। ननु भावविषयत्वमेव स्यादत आह भावे चेति। ननु स्वार्थे विधानमपि 'भावे' इत्येव सिद्धमत आह साध्यमानेति। 'अकर्त्तरि' इति तु सामान्यप्राप्त-

कर्त्रर्थाऽसंवन्धार्थं स्यादिति भावः। भाष्ये विहित इति। एवञ्च सामर्थ्यात्कारक एव भविष्यतीति भावः। इतर आह तेनेति। 'अकर्त्तरि संज्ञायामेव' इति सामान्यतः 'कर्त्तरि कृत्' इति सूत्रप्राप्तकर्त्तरि न, किन्तु भावे। तत्र च संज्ञायामेवेत्यर्थः। संज्ञाभूत इति। संज्ञात्वम्प्राप्त इत्यर्थः। भावः भावप्रत्ययान्त इत्यर्थः। यदर्थौ विधिरिति। नियमविधिरित्यर्थः। योगविभागास्त्विति। 'अकर्त्तरि' ग्रहणाच्चेत्यपि बोध्यम्, नियमपक्षे तस्याऽपि वैयर्थ्यादित्याहुः उक्तो भावभेदो भाष्ये इति। शंकित्रतिरिक्तस्य च्छात्रस्य वाक्यमित्येके। भगवत एवेत्यन्ये। भाष्ये नञिवयुक्तमिति। प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इति भावः। घञनुक्रमणमित्यादीति। 'परिमाणाऽऽख्यायाम्' इत्यादिघञ्विधानमजपोरेव वाधकं न तु स्त्रीप्रत्ययानामित्यर्थकं हि तद्वार्त्तिकमिति भावः। ननु 'परिमाणाऽऽख्यायाम्' इत्यत्र 'कारके' इत्यनुवृत्तावपि कर्मणि क्तिनं वाधित्वा घञ्मा भूदित्यर्थं तदावश्यकमिति चेन्न परिमाणाऽऽख्यायां 'भाव' एव क्तिनं मन्यतेऽभिधानस्वाभाव्यादिति न दोषः॥ १६॥

———

## परिमाणाऽऽख्यायां सर्वेभ्यः (३।३।२०)

परिमाणं परिच्छित्तिः। तस्या आख्यानं कथनं तत्रेत्यर्थः। परिच्छित्तिश्च प्रत्ययार्थस्येति भावः। सा च 'एकादि' शब्दैरुदाहरणेषु स्पष्टैव पुनर्विधानादेवाऽजव्विषये भवतीत्यत आह अन्यथेति। उपादानादनेनैवेति। 'परिमाणाऽऽख्यायाम्' इत्यनेनैवेत्यर्थः। 'निरभ्योः पूल्वोः' इति च न कार्यमिति भावः। निश्चायनिष्पावौ कर्मणि घञन्तौ। तण्डुलशब्देन शूर्पशब्देन च तत्पुरुषः। निश्चीयतेः स भावसाधनो वा

निश्वायो राशिः। अत्र राशेरेकत्वेन परिच्छेदः। निष्पूयते तुषाद्यपनयनेन स निष्पावस्तण्डुलराशिः। अत्राऽपि संख्यया परिच्छेदः। निश्चाये 'ग्रहवृद्द' इति अप्राप्तिः। वाध्यमात्राऽपेक्षायामिति। सामान्यचिन्तायामिदम्। वाध्यविशेषचिन्तायामपि प्रकारविशेषमाह समुदायाऽपेक्षायां वेति।

ननु 'भावे' इत्यनेनैव सिद्धमत आह कर्मण्यपीति। परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम्। भाष्येऽथाऽपीति। एवञ्च पाकादिशब्दानामसंज्ञात्वात् 'अकर्त्तरि च' इत्यनेन न सिद्धमित्यर्थः। एवञ्चाऽसंज्ञार्थं 'परिमाणाऽऽख्यायाम्' इत्यस्य चारितार्थ्यात् अजपोर्विषये घञर्थं 'सर्व' ग्रहणमावश्यकमिति भावः। समाधत्तेऽजपावपीति। एवञ्च 'तण्डुलनिश्चाय' इत्यादावप्यसंज्ञात्वादपोऽप्राप्तौ 'परिमाणाऽऽख्यायाम्' इत्येव 'घञ्' सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः। अजपोः संज्ञाविषयत्वे युक्तिमाह यथाजातीयक इति। अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञपवादत्वमेव न स्यादिति भावः। वण्ठो * मृतभार्यः। ननु धातुविशेषणात् 'सर्वेभ्य' इति पञ्चम्यन्तात् 'सर्वेषु' इति कथं लभ्यतेऽत आह सर्वेभ्य इति। तादर्थ्ये इति। नन्वपादाने 'अकर्त्तरि च कारके' इत्युक्तेः सिद्धमत आह तेनाऽधिकरणेति। अपादानन्तु दृष्टान्तार्थमिति भावः। तदुदाहरणम् 'अधीयतेऽस्मिन्नित्यध्यायः' इति स्वाध्यायकाल इत्यर्थः। भाष्ये णच् स्त्रियामिति। सर्वेभ्य इति 'व्यावचोरी' † इत्यादौ युजादिविषयेऽपीत्यर्थः। भाष्ये कर्मव्यतिहारे इत्यादि। तत्र

---

* वण्ठस्य व्यवहारोऽस्ति यस्य स वण्ठव्यवहारी। 'वण्ड-वोहारि' इत्यपभ्रंशः भाग्यहतकार्थः। इति सम्पादकः।

† व्यावचोरी=परस्परचौर्यम्। सं०

'णज्' विधायके सूत्रे 'स्त्री'ग्रहणं 'व्यतिपाको वर्त्तते' इत्यत्र णजभावाऽर्थम् । 'स्त्रियां क्तिन्' इत्यतः पृथग्ग्रहणन्तु 'व्यावचोरी' इत्यादौ 'ण्यास' इति युजादीनां बाधकानां बाधनार्थम् । न च 'व्यतीक्षा' ऽऽदिषु 'गुरोश्च हल' इत्यस्याऽपि बाधप्रसङ्गः, 'स्त्रियां क्तिन्' इत्यधिकारे एव कर्मव्यतिहारे णच् । ततो णिच् इति न्यासेन सिद्धेरिति तद्वार्त्तिकार्थः । इनुण् सर्वेभ्य इति । 'सांराविणम्'* इत्यादौ भावक्तादिविषयेऽपीत्यर्थः । अभिविधाविति । शब्दशक्तिस्वभावाद्भावे एव 'इनुण्' सिद्धौ 'भाव' ग्रहणं 'वाऽसरूप' न्यायेन पक्षप्राप्तक्तादिनिवृत्त्यर्थम् । 'नपुंसके भावे' इत्यनन्तरमेव वक्तव्ये पृथग् ग्रहणन्तु क्तस्य बाधकानां खलर्थानामपि बाधनार्थम्पूर्वविप्रतिषेधेनेति भावः । क्तवल्ल्युटोर्बाधस्तु नेष्यत इत्यत आह न तु ल्युट इतीति । एतद्वार्त्तिकार्थः । उभयाऽधिकारादिति । परिमाणाऽऽख्यायां भावेऽपीष्टेरिति भावः । उदाहरणयोर्भावे क्तिन् पूर्वसूत्रस्थभाष्यस्वरसात् । घञाश्रयेति । घञाश्रयायान्तु 'जनीज्टृषक्नसु' इति मित्त्वेन 'जार'× शब्दे ह्रस्वापत्तिरिति भावः । ननु जॄणातिरपि क्र्यादौ पठ्यते अत एव तद्व्यावृत्तये 'जनीज्टृष्' इति गणसूत्रे षकारोच्चारणम् । एवञ्च तस्याऽमित्त्वेन तस्माद्द घञि णिलोपेनाऽपि सिद्धं 'जार' इतीति चेन्न 'मितो जर, इति रूपव्यावृत्त्यर्थत्वात् । दारयतेर्यद्यपि पचाद्यचा सिद्धं तथापि 'अच्कावशक्तौ' इति स्वरव्यावृत्तय इदम् । करणे घे इति । 'पुंसि संज्ञायां घ' इत्यनेन । इदमुपलक्षणं ल्युटोऽपि ॥ २० ॥

---

* सांराविणम् सर्वत्र विलापः । सं०

× जारः स्त्रीणामतिचारि मित्रम् । 'जार' एवाऽपभ्रंशपरम्परयाऽधुना मित्रार्थको 'यार' शब्दोऽस्त्रीविषयेऽपि लोके प्रयुज्यते ।

## इङश्च ( ३।३।२१ )

ननु सूत्रेणैव सिद्धमत आह प्रकृत्येति । सजातीयत्वादित्यर्थः । तथा च स्त्रियां 'क्तिनो' बाधार्थमिति भावः । कर्मणीति । हरदत्तस्तु करणे इत्याह निव्रियतेऽनेन इति निवृतम् आच्छादनम्, बाहुलकात्करणे क्तः । तदाह अकृताच्छादन इति ॥ २१ ॥

---

## समि मुष्टौ ( ३।३।३६ )

अङ्गुलीति । दृढमुष्टिताऽनेनाऽन्वाख्यायते । मुष्टिकस्येति भाष्ये । 'मुष्टौ❀ कुशल' इत्यर्थे आकर्षादित्वात्कन् निपातनम् अधः पातनम् ॥ ३६ ॥

---

## कर्मव्यतिहारे णच् स्त्रियाम्। ( ३।३।४३ )

भाष्ये व्यतिपाकार्थमिति । पुंल्लिङ्गे भावे मा भूदित्यर्थमित्यर्थः । अकर्तृकारके तु नाऽनभिधानादिति 'स्त्रियां क्तिन्' इत्येतदपेक्षयेति भावः । बाधकानामिति । 'व्यात्रचोरी' इत्यादौ 'ण्यास' इति युजादीनामित्यर्थः । अत्रेदं बोध्यम् । क्तिनोऽयमपवादः । अतः एव पक्षे 'वाऽसरूप' विधिना सोऽपि । अन्येषां तदपवादानान्तु पृथक् पाठेन पूर्वविप्रतिषेधकल्पनया बाधकः । अत एव व्यतीक्षाया असिद्धिः शंकिता भाष्ये विप्रतिषेधविषये वाऽसरूपाऽप्रवृत्तेः । णिजग्रहणञ्चेति । इदं 'व्यावचोरी' इत्यादौ

---

❀ 'अनेकार्थाः शब्दाः' शब्दाश्च कामधेनव' इत्यभियुक्तिद्वयेन 'मुष खण्डन' इति धात्वर्थबलेन च 'मुष्टिः ऋणस्य खण्डशो दाने 'किस्त' इति नाम्ना प्रसिद्धेऽर्थे प्रयुज्यते । अधुना बंधकपत्रे 'मुष्टि' इति नाम्ना धनिकधारणिकाभ्यां लेख्यते इति सं० ।

वाधकवाधनार्थम्। व्यावक्रुष्टिरिति। स्पष्टश्चाऽयम्प्रयोगो वाऽसरूपसूत्रे। 'व्यात्युक्षी'* इति च माघकाव्ये (८।३२)। क्तिन्नेति। स्त्र्यधिकारे 'वाऽसरूप' विधेरभावाद्व्यात्युक्ष्यामपवाद्विप्रतिषेधेन 'गुरोश्च' इत्यप्रत्ययप्रसङ्गादिति भावः। एवञ्च 'वाऽसरूप' सूत्रस्थप्रयोगाऽनुष्ठानरूपभाष्यविरोधात् 'सिद्धन्तु' इत्याद्येतत्सूत्रस्थवार्त्तिकमेकदेश्युक्तिरिति भावः। व्यावचोरीव्यतीक्षे बहुलग्रहणात्साध्ये इति तात्पर्यम्। उत्तरन्तु स्त्रियामिति। प्रकरणप्रयुक्तलाघवाद्बाहुलकस्य तवाऽप्यावश्यकत्वाच्च वार्त्तिकोक्तमेव युक्तमिति।४३।

---

## अभिविधौ भाव इनुण् (३।३।४४)

द्वये अपि प्रकृते इति। प्रकरणे इत्यर्थः। द्वयोरपि प्रकृते इति पाठान्तरम्। भाव एवेति। णच्वदिति भावः। मध्येऽपवादा इति। वाध्यसामान्यचिन्तयेदं सिद्धमिति 'वाऽसरूप' न्यायेन पक्षे प्राप्तयोरपि तयोर्बाधनार्थं 'भाव' ग्रहणमिति भाष्याऽभिप्रायवर्णनमुचितम्। वाऽसरूप इति। स्त्र्यधिकारे एव 'वाऽसरूप' निषेध इति प्राक् प्रतिपादनादिति भावः। भाष्ये ये तस्येति। क्तस्य वाधकाः खलर्था इत्यर्थ उचितः। कैयटोक्तार्थे नाऽन्तरस्वारस्यं भावग्रहणफलादिविशेषश्च। अत्राऽप्येवंक(र)णात्पूर्वविप्रतिषेधकल्पनेति तात्पर्यम्। संकूटनमित्येवेति। संकूटनमिति भवत्येवेत्यन्वयः। अत एव 'पुंयोगाद्'इति सूत्रस्थः 'सांकूटिनम्' × इति भाष्यप्रयोगः संगच्छते॥४४॥

---

* व्यात्युक्षी जलक्रीडा व्यतिहारेण परस्पराऽभ्युक्षणम्।

× सांकूटिनं सम्यक्कूटव्यवहारः, इति सं०।

## एरच्। ( ३।३।५६ )

भाष्यकारवचनादिति। ततो बाहुलकाल्ल्युडपीति भावः। स्वरे इति। अपि आद्युदात्तम्, अच्यन्तोदात्तमित्यर्थः॥ ५६॥

---

## ग्रहवृदृनिश्चिगमश्च। ( ३।३।५८ )

भाष्ये स एव स्वर इति। 'थाऽथघञ्', इति सूत्रेणेति भावः। भाष्ये स्तेये वर्त्तते इति। हस्तादानविषये इति भावः। किन्तर्हि घञेवेति। हस्ताऽऽदानविषये इत्यर्थः। प्रकृतसूत्रे 'निश्चि' ग्रहणं स्तेयार्थञ्चेद्घञोऽप्राप्तेरचैव सिद्धम्। अस्तेथार्थं चेति तन्न निःपूर्वचिनोतेः पूर्वविप्रतिषेधेन घञ एवेष्टिरिति भाष्यार्थः। घञचेति पाठे 'च' शब्द एवार्थो द्रष्टव्यः। कृत्स्वरेणेति। 'गतिकारकोपपदात्' इति विहितेन॥ ५८॥

---

## स्तम्बे क च ( ३।३।८३ )

अनेकेनेति। घनाऽन्तर्धनप्रघणप्रघाणोद्घनाऽपघनरूपेणेत्यर्थः। अप्स्वरेणाऽऽद्युदात्तेति। निपातने तु निपातनात् 'फिषोऽन्त' इति सिद्धिरिति भावः। तत्राऽतो लोप इति। प्रत्ययसन्नियोगशिष्टतया विधानादार्धधातुक इति लोप इति भावः। आदेशाश्च स्थानिस्वरेणाऽन्ततर्म्यादन्तोदात्ता इति तात्पर्यम्। तस्य सर्वोऽपवादत्वादिति। यद्यपि पुंस्ययं चरितार्थस्तथापि 'बहुल' ग्रहणादिति भावः। भाष्येऽजब्भ्यामिति। 'हेतिः' इति निपातनमप्यकरणे चरितार्थमिति भावः। निपातितशब्दः शस्त्ररूढ एवेत्यन्ये॥ ८३॥

---

## स्त्रियां क्तिन् । ( ३।३।९४ । )

क्तिन्नावादिभ्य इति । वचनं 'गुरोश्च हल' इत्येतत्प्राप्तियोग्यविषयं 'निष्ठायां वा सेटोऽकारवचनाद्' इत्यनेन समानयोगत्वेमत्वादित्याहुः । एवञ्च निष्ठायामनिटस्तत्सूत्रप्राप्तिविषया 'आबादय' इति फलितम् ॥ ९४ ॥

---

## स्थागापापचो भावे । ( ३।३।९५ )

वाध्यमात्रेति । वाध्यसामान्यचिन्तेयम् । वाध्यसमुदायेति । विशेषचिन्तायामपि प्रकारविशेषः ॥९५॥

---

## व्रजयजोर्भावे क्यप् । (३।३ ९८)

उत्तरेति भाष्ये । तद्विषयोदाहरणदानादिति भावः ॥९८॥

---

## कृञः श च । (३।३।१००)

वा वचनमिति । इदमेव ज्ञापयति 'वर्णगौरवादपि योगविभागो गरीयान्' इति भावः ॥१००॥

---

## इच्छा । ( ३।३।१०१ )

शे यगभाव इति । भावार्थकत्वाद्यकः प्राप्तिः ॥१०१॥

---

## षिद्भिदादिभ्योऽङ् । ( ३।३।१०४ )

ननु गुहा न गिरिरत आह गिरिशब्द इति ॥१०४॥

---

## ण्यासश्रन्थो युच् । (३।३।१०७)

भाष्ये न पुनरादेरिति । एवञ्च पाक्षिकाऽनिष्टप्रसङ्ग इति भावः । यत्तु प्रथमाऽतिक्रमे कारणाऽभावादादेरेव स्यादिति तन्न तन्न्यायस्याऽत्र शास्त्रेऽनङ्गीकारात् । अत एव 'आद्युदात्तश्च' इति सार्थकम् । अत एव 'तित्स्वरितम्' इति तव्यादावन्तस्वरित-सिद्धिरिति बोध्यम् । अन्त्यस्येति । आदेस्तु 'आद्युदात्तश्च' इत्यनेन सिद्ध इति भावः । प्रतिज्ञानसामर्थ्यादिति । इदञ्च चित्त्वेऽपि तदनुबन्धकपरिभाषया ल्युटोऽग्रहणशंकावारणायाऽऽ-वश्यकमिति भावः ॥ १०७ ॥

---

## रोगाऽऽख्यायां ण्वुल् बहुलम् । (३।३।१०८)

धातुकृतोऽर्थः साधनमिति भ्रमं वारयति क्रियेति । भावा धिकारेऽपि 'कारक' निवृत्त्यर्थमिदम् । इक्श्तिपौ क्वचिन्नेति । 'भुवो वुग्' इत्यादौ । शित्करणादिति । 'शित्' करणस्य पिबा-द्यादेशविधानेन चारितार्थ्यादिदञ्चिन्त्यम् । तस्मान्निर्देशैरेव विकरणः साध्यः । भाष्ये पचेरिति । कर्मणः शेषत्वविवक्षायां षष्ठी, प्रयोगान' इति शेषो वा । धात्वर्थनिर्देशेऽप्येतौ बाहुल-कात् । अत एव 'ईक्षतेर्नाशब्द,' 'आङौ प्रभूतादिभ्य' 'गच्छतौ परदारादिभ्य' इति प्रयोगाः सङ्गच्छन्ते । कृत्संज्ञेति । बाहुलका-दित्यन्ये । एवं मत्वर्थीय इति । प्रातिपदिकत्वाद्विभक्त्युत्पत्तिरित्य-नुषङ्गः । आर्द्धधातुकत्वाऽभावादतो लोपाऽप्राप्तेः स्वादित्वाऽभा-वेनाऽभत्वाद्यस्येति लोपाऽप्राप्तेश्चाह भाष्यकारेति । बहुल ग्रहणादिति सारम् । तदाश्रयेण भाष्यकारवचनं हेतुः बहुव्रीहिः स्वार्थिकोऽयं छः षष्ठीतत्पुरुषात् । गहादित्वाच्छेन कश्चित्सा-धयति ॥ १०८ ॥

---

# संस्कृतगवेषणा ।

—:०:※:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सन्निधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अवका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंबन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तरतर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

बालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

## उद्योतनियमः।

—:*:o:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निःसरिष्यति। भविष्यति मुद्राषट्कं वार्षिकं मूल्यमस्य मुद्रणकर्मणि परिसमाप्ते। ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्धचतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति। अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस।)

श्रीमते वायुपुत्राय नमः ।

# भाष्यप्रदीपोद्योतः ।

महामहोपाध्यायनागेशभट्टविरचितः



द्विवेदोपाह्वेन

बालगोविन्दशास्त्रिणा वैद्येन

संशोधितः

प्रकाशितश्च ।

गोपालचन्द्र चक्रवर्ती द्वारा भारतधर्म प्रेस, काशीमें मुद्रित ।

# अभ्यर्थना ।

—**०**—

महोदयाः

अस्ति खलु विदितमेतद्यदधुना वाराणसेयानां विदुषां वैदुष्यम्प्रायः पाणिनिव्याकरणमधिष्ठायैव परिष्कारबलेन सर्वोपरि वरीवर्त्ति । व्याकरणञ्च तन्महर्षिभगवत्पतञ्जलि प्रणीतमहाभाष्यमन्तरेणाऽकिञ्चित्करम् । तच्च महाभाष्यमत्यर्थ गूढाऽभिप्रायमित्यालोच्य कैयटेन तदर्थबोधनाय प्रदीपो व्यधायि । ततः कालक्रमात् जनानां बुद्धिवैपुल्याऽभावात् परमकारुणिकेन महामहोपाध्यायनागेशभट्टेनोभयार्थद्योतकोद्योतो व्यधायि । किन्तु, अयमुद्योतोऽद्यावधि आपादचूडं न क्वापि मुद्रित इति महान् खेदः । केवलमादितोऽध्यायद्वयमुद्योतस्य 'बम्बई' नगरे मुद्रितम् । तृतीयाऽध्यायादारभ्याऽऽसमाप्ति मुद्रयितुमहं बद्धपरिकरः केवलं धाष्ट्र्यादेव सञ्जातोऽस्मि । तत्रभवतो नागेशभट्टविदुषः पुण्यप्रभाव एव मां तारयिष्यतीति मदीयो दृढविश्वासः ।

आदर्शपुस्तकञ्चैकमेव 'कश्चिदाय' विक्रमवत्सरलिखित मस्ति । एकमपरम्पुस्तकमद्याभ्यर्थनालेखकाले 'टीकमणि कालेज' संस्कृतपाठशालाया व्याकरणप्रधानाध्यापकेन श्रीमद्विद्वद्वरपूर्णचन्द्राचारिणा श्रीविद्वद्वरानन्तरामशास्त्रिणः सकाशादवाप्य प्रदत्तमिति, उभयोरपि विदुषोराजन्माहं ऋणी भविष्यामि । प्राप्तस्यास्य 'ख' संज्ञा भविष्यति । उद्योतस्यास्य सभाष्यस्य 'क' संज्ञकं पुस्तकं श्रीमद्विद्वद्वररामचन्द्रशर्मणा मम पित्रा संगृहीतन्तत्तु मदीयमेव । एताभ्यां मुद्रितेऽस्मिन्नुद्योते यदि क्वापि स्खलनं स्यात्तर्हि विद्वद्भिः क्षन्तव्यमिति विदुषां वशंवदः ।

बालगोविन्द वैद्यः । मार्गशीर्ष १५ ।

हि पुंयोगात्स्त्रियां वृत्तौ स्त्रीत्वप्रतीतिसमये एव गौणार्थतेति भावः । अत्राऽऽहुः । लाक्षणिकमात्रं न गौणत्वं, किन्तु सदृशलाक्षणिकत्वमिति कथमत्राऽस्य न्यायस्य विषयः । शूद्रस्य स्त्री इत्यर्थे तु न टाप्, जातिवाचिमहत्पूर्वभिन्नस्य तत्सदृशस्य स्त्रीत्वविशिष्टजातिबोधकस्यैव शूद्रशब्दस्य ग्रहणात् । किञ्च, येषां शब्दानामर्थस्य स्वत एव स्त्रीत्वं, ततः ❀ पुंयोगाद्वृत्तिरिति 'अश्वस्य स्त्री' इत्यर्थे ङीप्स्यादिति न वाच्यम्, यदा त्वन्यजातिः शूद्रस्य भार्येति, विवक्षिता तदा 'शूद्री' इत्येवेति दिक् । अन्तरङ्गत्वादिति । एवञ्चाऽऽरब्धेऽपि 'अशक्यक्रियः प्रतिषेध' इति प्रश्न इति भावः । निर्वृत्तस्य वचनशतेनाऽपि दूरीकर्त्तुमशक्यत्वादिति तात्पर्यम् । आभीरेति । क्षत्रियाच्छूद्रकन्यायामुत्पन्नोग्रकन्या, तस्यां ब्राह्मणादुत्पन्न आभीरः । तदविवक्षित्वैवेति । अविवक्षायां हेतुः स्त्रीत्वाऽभावः । ननु जातेरन्यत्राऽन्तरङ्गे टापि ततः सुपि समासे च जातस्य टापो निवृत्त्ययोगान्निषेधो जातावेव पर्यवस्यतीति नाऽर्थो जातिवचनेनेत्यत आह असतीति । एतत्सर्वं चिन्त्यम्, आभीरजातिवाचिमहाशूद्रशब्दे प्रतिषेधाऽवकाशात् । न चाऽनर्थकस्तत्र शूद्रशब्द इति तदन्तेन प्राप्त्यभावादनर्थकः प्रतिषेधः, महाशूद्राऽवयवशूद्रशब्दस्याऽऽनर्थक्ये तदन्तादापः प्राप्तिरेव नेति निषेधवैयर्थ्याऽनुद्धारात्, जातिरित्यस्य सुतरां वैयर्थ्याऽनुद्धाराच्च । वस्तुतो या हि महती शूद्रा तद्विवक्षायां जातिमात्रविवक्षया कुक्कुटाण्डादाविव 'शूद्र' शब्देन समासे ततः स्त्रीत्वविवक्षायां निषेधे सति जातिलक्षणो ङीष् माभूदित्यर्थन्तत्, महाशूद्रशब्दे शूद्रशब्दश्चाऽर्थवानेवेति भाष्याशयः । भाष्ये ग्रहणवतेति । प्रत्ययविधौ प्रतिषेधोपलक्षणमिदम् । उगिदन्तादपीति । भवच्छब्दः शत्रन्त इत्यभि-

❀ 'तत' इत्यत्र 'तत्र' इति ख पाठः ।

प्रायेणेदम् । उगिदन्तादपीति तु युक्तः पाठः । ननु गौरादिपाठान्महच्छब्दे ङीषा भाव्यं, न तु ङीपेति, भाष्ये महतीत्येतत्कथनमयुक्तमित्यत आह गौरादिष्विति । ननु गौरादिपाठेन तद्वचनमेव प्रत्याख्यायतामिति चेन्न, अन्यार्थमावश्यकत्वादित्याह विभक्तीति । फलान्तरमप्युपसंख्यानस्याह अनुपसर्जनेति । भाष्ये जातिरिति चेति । तदन्तविधौ हि सति 'अमहत्पूर्वा' इत्यस्य करणे तद्विशेषणं जातिरिति वक्तुं शक्यमिति भावः । जातिरित्यपि मास्त्विति शङ्कमानं प्रत्याह अन्यथेति । महत्पूर्वेति । प्रतिषेधाऽभावे जातिरित्यस्याऽभावादनयोर्विषयविभागो न स्यादिति भावः । साधुत्वमिति । स्पष्टं प्रतीतिर्न स्यादिति भावः । ननु 'अजाद्यत' इति पञ्चम्या कथं स्त्री विशेष्येत्यत्राह अजाद्यत इतीति । नन्वेवं 'टाप्कस्माद्' इति न ज्ञायेतेत्यत आह प्रत्यासत्त्येति । सामर्थ्याद्वेति । अजाद्यन्तप्रातिपदिकवदर्थगतस्त्रीत्वप्रतिपादनं तदुत्पन्नेनैव प्रत्ययेन शक्यते कर्त्तुमिति भावः । न हीति । समुदायस्य जातिविशेषवाचित्वेन शूद्रशब्दस्य नैरर्थक्येन स्त्रीत्ववृत्तित्वाऽभावादिति भावः । तदन्तविधौ तु ज्ञापकान्तरमनुसर्त्तव्यम् । अत्र केचित्, 'अनुलोमसंकराणामपि मातृजातिवृत्तेः स्मृतिषूक्तत्वेन मातृजातीयत्वात्तत्राऽपि शूद्रत्वमस्ति, अत एव शंखस्मृतौ 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव, इत्युक्तम्, 'शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता' इति स्मृतिरपि तेषां शूद्रत्वाऽऽरोपमूलिकैव, अन्यथाऽस्य मूलान्तरकल्पने गौरवं स्यात्, स्मृतावपध्वंसः शूद्राविवाह उच्यते, शूद्रशब्दाऽर्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्वेव टापः प्रसङ्ग इति 'अमहत्पूर्वा' इत्यावश्यकम्' जातिप्रत्ययश्च शूद्रशब्देन समास एव, न तु शूद्राशब्देन समासे इति न प्रागुक्तदोषः, उक्तरीत्या जातिरिति चाऽऽव-

श्यकमेवेति भाष्यतात्पर्यम्, अत एव भाष्यकृता नेदं प्रत्याख्यातम्, इत्याहुः ॥ ४ ॥

---

## उगितश्च ( ४।१।६ । )

ननु भातेर्डवतौ निष्पन्नस्य भवतो नोगित्त्वं, किन्तूगिदन्तत्वमेवेत्यत आह सर्वादिष्विति । तत्त्वनार्षमित्याहुः । शतृवद्भावेति । 'वर्त्तमाने पृषन्महद्द् ( बृहज्❀) जगच्छतृवच्च' इत्यनेन । उगिद्व्यपदेश इति पाठे उगिदिति व्यपदेशो यस्येत्यर्थः । भाष्ये अतिभवतीत्यादि 'पचन्ती' इत्यादेरप्युपलक्षणं बोध्यम् । ननु प्रातिपदिकस्य स्वरूपेणोच्चारणाऽभावात्कथमत्र न्यायप्राप्तिरत आह ग्रहणमुपादानमात्रमिति । ननु मतुबादीनामुगित्त्वसामर्थ्यात्तदन्तविधिः स्यादत आह उगित्त्वन्त्विति । नुम् विधेराङ्गत्वेन तत्र तदन्तविधिरिति भावः । समुदायादिति । प्रत्ययग्रहणपरिभाषयेति भावः । नन्वाद्यपक्षे उगितो विशेष्यत्वात्तदन्तविध्यभाव इत्युक्तमिति शंकते ननु चेति । ननूगिच्छब्दस्य सन्निधानात्प्रातिपदिकमेवान्यपदार्थ इति प्रातिपदिकग्रहणमेवेदमत आह उगिद्यस्येति । शब्दरूपमात्रमिति । प्रत्ययोऽपीत्यर्थः । नन्वनुवर्त्यव्यपदेशिवद्भावाऽनारम्भ एव ज्यायानिति शंकायामाह तेनेति । व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति भावः । वस्तुत इदश्चिन्त्यं, तस्याः प्रत्ययविधिविषयत्वात् । 'गोक्षीरम्' इत्यस्य यथा वारणं तथा 'गोस्त्रियोः' इत्यत्रैव निरूपितम् । 'अर्वन्' शब्दस्य स्त्रियां वृत्तित्वं दर्शयति अश्वपर्याय इति× । भाष्यमिति । ङीपं निमित्तीकृत्यैवेति भावः । सम्भवमात्रेणेति । 'वर्णोऽप्युगित्सम्भवतीत्येतदेव भाष्येऽभिसंहितं, न

---

❀ 'बृहत्' शब्दः पुस्तकद्वयेऽग्रवर्त्तमानो भट्टोजिदीक्षिताऽनुरोधाल्लिखितः । × अर्वदेशीयोऽश्व इति सं० ।

तु प्रकृतोपयोगोऽपीत्यर्थः ❀। वस्तुतस्तु 'क्रोष्ट्री' इत्यादौ आङ्गोऽपि 'स्त्रियाश्च' इति तृज्वद्भावो यथा ङीबुत्पत्तेः प्राक्, तथा 'तृ' आदेशोऽपि ततः प्रागेवेति भाष्याशयः। भाष्ये अञ्चतेश्चेति। वार्त्तिके नलोपिन इति शेषः। एवं हि प्रत्याख्यानेन समफलता भवति। नन्वेवमधातोरितिव्यर्थमत आह अधात्विति। वाक्यभेदेनेति भावः। शब्द इति। अकारस्तूच्चारणार्थ इति भावः। भाविनमिति। ङीपि कृते भाविनमित्यर्थः। नलोपस्तु न्याय्य एवेति भावः। तदापि ङीब्भवतीति। इदश्चिन्त्यम्, आद्यव्याख्याने 'उगिदचाम्' इत्यत्र न लोपस्य विवक्षितत्वात्पूजायामप्राप्तेः। अत एवौपदेशिकं 'प्राची' इत्याद्यपहायाऽऽतिदेशिकं 'प्राची' इत्याद्युदाहरणं भाष्ये दत्तम्, उगित्यञ्चतिग्रहणादिति चोक्तम्, अन्यथा 'उगिति' इत्यस्य नोपयोगः स्यात्। एवञ्च पूजायां 'प्राची' इत्याद्यसाध्वेवेत्यन्ये ॥ ६ ॥

---

## वनो र च + (४।१।७।)

ननु वनिपा व्युत्पन्नस्य कथमव्युत्पन्नत्वमत आह श्वन्नुक्षन्निति। ननु तेन 'कनिन्' प्रत्ययस्य महेर्घस्याबुमागमस्य च निपातनाद्व्युत्पत्तिपक्षेऽपि नैरर्थक्यान्न दोषोऽत आह नाऽवश्यमिति। इत्याऽऽशयेनाऽव्युत्पन्नत्वमेवोक्तमिति भावः। अनपेक्षेति। अनपेक्षा च तेषामाधुनिकत्वादिति बोध्यम्। यज्वरीरिति। जसन्तम्। भो यजनशीलाः प्रजाभ्य इषोऽन्नानि देयत्वेन च

---

❀ 'प्रकृतोपयोगेऽपीत्यर्थः' इति खे पाठः।

+ अस्योदाहरणं तारानाथेन स्ववाचस्पत्याभिधानसंग्रहे 'अवावन्' शब्दे स्त्रीलिङ्गे 'अवावरी' इति साधितं, तन्महदशुद्धम् 'वनो न हशः' इति वार्तिकविरोधादिति सं०।

नस्यत प्रार्थयतेति मन्त्राऽर्थः। तत्र 'दीर्घाज्जसि' इति निषेधाद्दीर्घो दुर्लभोऽत आह वा छन्दसीति। ननु 'बह्वयो धीवर्यो यस्य, इति बहुव्रीहावन्तरङ्गत्वाज्जातयोर्ङीब्रयोः प्रतिषेधस्य वचनेनाऽशक्यत्वादुपसंख्यानं व्यर्थमत आह बहव इति ❀। यदि वेति। इदञ्चाऽवश्यकमिति 'न षट्' इत्यत्र वक्ष्यामः। इत्यस्याऽनन्तरमिति। यथान्यासेऽपि 'अनुपसर्ज्जनाद्' इतीह न सम्बध्यते बहुव्रीहावन्नन्तस्याऽनुपसर्जनस्याऽसम्भवादिति भावः। ननु वचनेन वचनप्रत्याख्यानमयुक्तमत आह तेनान उपधेति। ङीब्विकल्प इति। प्रतिषेधविकल्पे विधिविकल्पः फलतीति भावः। बहुराजानाविति। एकवचने प्रतिषेधे डापि च रूपभेदाऽभावाद्द्विवचनमुदाहृतम्। पूर्वोक्तमिति। 'अन उपधा' इत्यनेन विहिते ङीपि 'र'मात्रमनेन विधीयत इत्येतमित्यर्थः। यथोपसंख्यानमिति। बहुव्रीहेरित्येतत्परिहार उपधालोपिनो वेत्येषः। ननु 'अन उपधा' इति ङीपि तत्सन्नियोगेन 'वनो र च' इत्यनेन राऽऽदेशस्याऽपि सिद्धेः 'बहुव्रीहेश्च' इत्युपसंख्यानं व्यर्थमतो भाष्ये ङीप्सन्नियोगेनेति। 'ऋन्नेभ्य' इति ङीप्सन्नियोगेनेत्यर्थः। ननु 'ऋन्नेभ्य' इति ङीप्सन्नियोगेनैवैतत्सन्नियोगेनाऽपि रत्वं दुर्वारमत आह प्रकरणान्तरेति। वचनेनेति। वचनसामर्थ्येनेत्यर्थः। भाष्ये किम्पुनः कारणं ङीविति। सूत्रेणोपसंख्यानेन च किमिति मानान्तरसिद्धङीप्सन्नियोगेन रो विधीयते, अपूर्वावेव 'ङीरौ' किं न विधीयेते इत्यर्थः। अपूर्वविधाने च नित्यतैव स्यादिति भावः। तत्तद्युपसंख्यानमिति। 'वनो र च' इत्यनन्तरं 'बहुव्रीहेश्च' इतीत्यर्थः। उपधालोपिनो वेति। न्यासाऽभावे इति शेषः। प्रत्ययग्रहणमिति। तद्धितवनिपो ग्रहणे प्रत्ययग्रहणम्, फलाऽभावात्तदग्रहणे तु कृद्ग्रहणमिति विवेकः। तदन्तविधेरिति।

❀ 'धीवन्' शब्दः कर्मकरवचन इति सं०।

'प्रत्ययग्रहण' परिभाषया वन्नन्तग्रहणे, तेन च प्रातिपदिकविशेषणे तदन्तविधेर्ज्ञापनादिति भावः ॥ ७ ॥

---

## न षट्स्वस्रादिभ्यः ( ४।१।१० )

आचार्य इति । आचार्यदेशीयोक्तिरित्यपि वक्तुं शक्यम् । नोभाविति । पूर्वपक्ष्युक्तिः । वार्त्तिककार एवाऽत्र पूर्वपक्षी । आचार्य आह तत्तर्हीति । इत्यन्ये । ननु 'टाबृचि' इत्यनन्तरमत आह यस्त्विति । नन्वित्त्वं टापो न विधीयत इति कथं सुब्विधिरत आह तत्र हीति । ननु 'स्त्रियाम्' इत्यनुवृत्तावपि स्त्रियां विहितं नेत्यर्थेऽन्यतरस्येत्यादि दुर्वारमत आह अर्थाश्रयेति । 'प्रियपञ्चा द्रौपदी, अतिपञ्चा कुलटा' इत्यादौ गौणेऽप्ययं निषेधः तदन्तविधिसत्त्वात्, बहुवचनस्य व्यक्तिबहुत्वाऽभिप्रायेणैव सत्त्वेनाऽर्थप्राधान्य एवैतत्प्रवृत्तौ मानाऽभावाच्च । एतेन 'चापः पकारेण प्रत्याहारे इत्वे दोषवद् अतिपञ्चा कुलटेत्यादौ टान्न स्यादिति दोषाऽनुपन्यासे बीजाऽभाव, इत्यपास्तम् । एवञ्चैतद्भाष्यप्रामाण्याद् 'बहुधीवभ्याम्' इत्यत्र नलोपे टाबभाव निर्णयाद् 'अनो बहुव्रीहेः' इत्यनेनाऽप्युभयोर्निषेधः । एतदभिप्रायेणैव पूर्वत्र यदि वा स्त्रियां यदुक्तमित्यादि कैयटेनोक्तमिति बोध्यम् ॥ १० ॥

---

## डाबुभाभ्यामन्यतरस्याम् ( ४।१।१३ । )

योगाभ्यामप्रत्ययविधेरसम्भवादाह योगस्येति । नन्वन्तरस्यैव सा स्यादत आह द्वयोरपीति । 'स्वरितेनाऽधिकार' इत्यस्य प्रत्याख्यानपक्षेऽप्याह अपेक्षणाद्वेति । ननु सम्भवत्येकविषयत्वे विषयभेदेन प्रवृत्तिर्न स्यादत आह यदि यत्रैवेति ।

भाष्ये डाप्प्रतिषेधाभ्यां मुक्ते इति। 'अन्यतरस्यां' ग्रहणं वाक्यभेदेनाऽनन्तरस्य 'अनो बहुव्रीहेः' इत्येतस्य विषये ङीबनुज्ञानार्थमिति भावः। तदर्थमिति। तत्र ङीबनुज्ञानार्थमित्यर्थः। न भाव्यमेवेति। सत्यसति वा 'अन्यतरस्याम्' ग्रहणे इत्यर्थः। विचार इति। प्रकृतविचारोपयोगि विचाराऽन्तरमित्यर्थः। ननु द्वयोरपि तयोः प्रत्याख्याने 'सुपर्वा' इत्यादौ सावकाशयोऽर्डाप्प्रतिषेधयोः 'अन उपधालोपिन' इति ङीप् 'बहुराजा' इत्यादौ बाधकः स्यादत आह इदमेवेति। इदश्च निषिद्धङीपोऽनुमतये अस्यैव च 'अन उपधालोपिनः' इत्येतन्नियमायेति 'वहुराजा' इत्यादौ ङीब्डाप्प्रतिषेधाः सिद्धाः, 'सुपर्वा' इत्यादौ च ङीबभावः। ननु प्रतिषिद्धो ङीप् कथमुच्यत इत्यत आह अन्यतरस्यां ग्रहणेनाऽत्रत्येनेति! भाष्ये अनवकाश इति। नित्यो 'अन उपधा' इति विधिस्तद्बाधनार्थः, विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः। तस्मादिति। 'अन उपधा' इत्यस्य नियमत्वार्थमित्यर्थः। अन्यथैतदन्यतरस्यांग्रहणबोधितविकल्पः 'सुपर्वा' इत्यादावपि स्यादिति भावः। विध्यर्थं भविष्यतीति। फले न कश्चिद्विशेष इति भावः। इत्येतत्सूत्रेति। अनन्तरत्वादिति भावः। ऋन्नेभ्यो ङीबित्यनेनैवेति। नियमार्थस्य तदनुवादरूपत्वादिति भावः। मन्नन्तादपीति। अबहुव्रीहौ 'पामे पामानौ' इत्यादौ डाविव 'अन्यतरस्याम्' इत्यनेन वाक्यभेदेनाऽनुज्ञायमानो ङीप्प्युभाभ्यां स्यादिति भावः। एकवाक्येन तदनुज्ञाऽसम्भवाद्वाक्यभेद आवश्यक इत्याशयेनाह अथ वेति। व्यवस्थितिविभाषया तु नैतत्साधयितुं शक्यं 'मन' इत्यस्य सम्बन्धे तद्वैयर्थ्यापत्तेः। तदाऽत्राऽपीति। डाप्टिलोपसम्प्रसारणपूर्वत्वदीर्घत्वेषु कृतेषु नद्यन्ततत्वादिति भावः। नद्यन्ततानां वर्त्तिपदानामिति। नद्यन्तोत्तरपदक इत्यर्थ इति भावः, बहुवचनं

प्रयोगबाहुल्याऽभिप्रायेण । ननु टिलोपे पराऽभावात्कथं सम्प्रसारणपूर्वत्वमत आह डापश्चेति । दीर्घप्रवृत्तिनिमित्तं सम्प्रसारणत्वं तदन्ताङ्गत्वश्चोपपादयति अन्तवदिति । 'हल' इति सूत्राऽऽरम्भसामर्थ्येनाऽल्विधावप्यतिदेशप्रवृत्तिरिति भावः । अन्तवत्त्वादेव च सम्प्रसारणं, तस्याऽङ्गत्वं बोध्यम् । एवं कपो निमित्तं बहुव्रीहित्वमप्यन्तवत्त्वेन बोध्यम् । तत इति । दीर्घाऽनन्तरमित्यर्थः । भाष्ये श्वादीनां सम्प्रसारणे इति । ननु टिलोपस्याऽऽभीयाऽसिद्धत्वेन कथं न नान्तत्वमिति चेन्न, तस्याऽनित्यत्वात्, 'ईदृशे विषये व्याश्रयत्वाद्' 'असिद्धत्वाऽप्रवृत्तिः' इत्यर्थस्य 'असिद्धवत्' सूत्रे उपपादयिष्यमाणत्वाच्च । प्रत्ययान्तरे इति । स च नाऽत्राऽप्युत्पन्न इति भावः ॥ १३ ॥

---

## अनुपसर्जनात् । ( ४।१।१४ )

शास्त्रीयमित्युक्तं तत्र किन्तच्छास्त्रीयमित्यत्राऽऽह समासाऽवयवभूतमिति । कृत्रिमत्वात्प्रथमानिर्दिष्टमित्यादीत्यर्थः । निषेधवैयर्थ्योपपादिकां विधेरप्राप्तिमुपपादयति तत्राऽवयवेति । कुरुचरशब्दो हि टित्, तदाश्रयो ङीप् समुदाये न प्राप्नोतीति निषेधो व्यर्थ इति भावः । नन्ववयवाऽनुदात्तत्वमाश्रित्य सनन्ताज् 'जुगुप्सत' इत्यादावात्मनेपदं दृष्टं तद्वदिहाऽपि स्यादत आह यदवयव इति । कार्यप्रयोजकं निमित्तम्, यथा पणायतीति । आर्धधातुके आयस्य वैकल्पिकत्वेन, केवले तच्चरितार्थमिति भावः । नन्वेवं तदन्तविधिना स्यादत आह तदन्तेति । इतरोऽमहत्पूर्वेतीति । अस्मादेव ज्ञापकात्तदन्तविधिरिति वक्ष्यमाण आशय इत्यन्ये । ननु बहूनां कुरूणां समाहारो बहुकुरु, तत्र चरतीत्यर्थे भाव्यमेव ङीपेत्यत आह बहव इति । ननु

टस्य टित्वात् टितो विधीयमानो ङीप् तत एव प्राप्नोति, तदन्तविधावपि 'चर' शब्दात्, सर्वथाऽपि 'कुरुचर' शब्दादित्युक्तमत आह टिड्ढेति। प्रातिपदिकाऽधिकारादिति भावः। नदडिति। पचादौ साक्षात्तथा पाठादिति भावः। स्तनन्धयीति। 'स्तनपा तु स्तनन्धयी' इत्यमरः। नन्ववयवटित्त्वद्वारेण समुदायस्य टित्त्वे 'बहुकुरुचरा' इत्यत्राऽपि स्यादत आह तत्र यमिति। न हीति। कृद्ग्रहणे एव सा परिभाषा, न तु कृदकृद्ग्रहणे इति भावः। भाष्ये तदन्तविधिप्रतिषेधादिति। 'समासप्रत्ययविधौ प्रतिषेध' इत्यनेनेति भावः। ग्रहणवता' इत्यपि 'वर्णग्रहणवर्जम्' इत्येतदर्थाऽनुवाद एवेति बोध्यम्। भाष्ये ज्ञापकन्त्विति। 'अनुपसर्जनाद्' इति तदन्तविध्यभावसिद्धाऽर्थाऽनुवाबस्तेन पूर्वत्र तदन्तविधिलाभ इत्याशयोऽत एव पूर्वत्रेत्युक्तम्। ननु 'वनो र च' इत्यत्र 'वन्' इति प्रत्ययग्रहणात्कथं 'ग्रहणवता प्रातिपदिकेन' इति निषेधोऽत आह वनो र चेत्यत्रेति। 'प्रत्ययग्रहण' परिभाषयेति भावः। तथा च सामर्थ्यगृहीतेन वन्नन्तप्रातिपदिकेन प्रातिपदिकाऽधिकारे विशेष्ये सम्भवन्नपि तदन्तविधिः प्रतिषेधान्न स्यादस्मात्तु ज्ञापकाद्भवतीति तात्पर्यम्। एतत्प्रकरणस्थशब्दानामस्त्रीलिङ्गप्रकृतिकाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानां स्त्रीलिङ्गानामभाव एवेति बोध्यम्। तत्पुरुष इति। बहुव्रीहौ तूपसंख्यानेन सिद्धमिति भावः। ननु पारिभाषिकोपसर्जनग्रहणे तदन्तविधिज्ञापनस्य प्रयोजनस्योक्तत्वेन कथं लौकिकोपसर्जनग्रहणं पक्षान्तरत्वेनोपन्यस्तं, कृत्रिमाऽकृत्रिमन्यायबाधस्याऽनुचितत्वादत आह नन्वमहदिति। तर्ह्यर्थ इति। यदि ज्ञापकस्य नोपयोगस्तर्हीत्यर्थः। ननु तेन तदन्तविधिज्ञापने 'बहुकुरुचरा' इत्यादिव्यावृत्त्यर्थ अधिकार आवश्यक इति 'तर्ह्यर्थे' इत्ययुक्तमत आह अथ वेति। पूर्वमिति। 'अमहत्पूर्वा'

इत्यनेनेत्यर्थः। अत्र पक्षे 'इदन्तर्हि प्रयोजनम्' इत्यग्रिमभाष्याऽस्वारस्यम्। तस्माद् 'अमहद्' इति ज्ञापकं लक्ष्याऽनुसाराज्ज्ञापकसिद्धस्य क्वाचित्कत्वेन पूर्वविषयमेव। अत एव पूर्ववार्त्तिके 'पूर्वत्र' इत्युक्तम्। एतत्प्रभृति तदन्तविधेः फलन्त्वयं न पश्यतीत्यपरे। भाष्ये पूर्वसूत्रेति। सामर्थ्याल्लक्ष्याऽनुसारिव्याख्यानाच्चाऽत्र कृत्रिमन्यायाऽप्रवृत्तिरिति भावः। ननु 'डाबुभाभ्याम्' इति पूर्वसूत्रे नाप्रधानस्योपसर्जनसंज्ञोक्तेत्यत आह पूर्वाऽऽचार्येति। ननु आपिशलिशब्दात्प्रोक्तार्थे छेन भाव्यमत आह इञश्चेतीति। साक्षाच्छब्दस्योपसर्जनत्वाऽसम्भवादाह अत्र चेति। अण् योऽकार इति। एवञ्च प्राधान्येन वर्णाश्रयत्वात्प्रत्ययलक्षणाऽभाव इति भावः। भाष्ये जातिशब्देभ्यस्त्विति। उपसर्जनार्थप्रतिपादकत्वादवन्त्यादिशब्दानामिति पूर्वपक्षः। उपसर्जनीभूतजात्यर्थप्रतिपादकादित्यर्थ इत्युत्तरम्। अनन्तराऽपत्येऽपि गोत्रत्वाऽऽरोपेणाऽत्र जातित्वम्। भाष्ये एवमपीति। अत्र प्रोक्ताया अपि स्त्रीत्वात्स्त्रियामणस्तीति पूर्वपक्षस्याऽऽशयः। उत्तरयति नैषेति। किमध्येत्रीगतस्त्रीत्वे प्रोक्ताऽणन्तादापादयसि, उत प्रोक्तागतस्त्रीत्वे। नाऽऽद्य इत्याह अध्येत्र्यामभिधेयायामिति। एवञ्चाऽत्र 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायि' इति न्यायेनाऽणन्तस्य तद्गतस्त्रीत्वाऽर्थकत्वेऽपि विद्यमानो योऽण् स तद्गतस्त्रीत्वाऽर्थक इति भावः। नाऽन्त्य इत्याह उत्पन्न इति। एतेनाऽर्थभेदेन लक्ष्यभेदात्प्रोक्तागतस्त्रीत्वे उत्पन्नत्वेऽपि अध्येत्रीगतस्त्रीत्वे स्यादेव। अत एव चित्रायां जाता 'चित्रा' इत्यादौ पुनष्टावित्यपास्तम्। प्रोक्तागतस्त्रीत्वे पुनरापादितस्य ङीप 'उत्पन्न' इत्यादिना वारणात्। यद्युत्पन्नः कथं न श्रूयतेऽत आह सोऽपीति। अध्येत्रणो लुक् 'भस्याऽढे' इति पुंवत्त्वे प्रोक्ताऽर्थकात्परत्वेन सुलभः लिङ्गविशि-

ष्टपरिभाषयाऽध्येत्रणो लुगित्यन्ये । प्रधानेनेति । उत्तरत्राऽपीति भावः । एवञ्चाऽस्य नाऽनुवादतामात्रं किन्तु व्यावर्त्तकताऽपीति भावः । गणपठितेति । वस्तुतो वार्त्तिकन्तत् । अत एव वक्तव्यमिति भाष्ये उक्तम्, गणस्य तु सूत्रकृदुक्तत्वात्तत्पदप्रयोगाऽसंगतिः । एवञ्च वार्त्तिकेन सूत्रप्रत्याख्यानं न युक्तमिति भाष्याऽऽशय उचितः । प्रतिषेधानपेक्षयेति । सूत्रस्याऽवश्यकर्त्तव्यत्वादिति भावः । प्रत्याख्यात इति । तद्गणपठितप्रतिषेधस्य ज्ञापकत्वाऽपेक्षया 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणत्वाऽपेक्षया चेति शेषः । केचित्तु तत्रत्या 'प्रत्याख्यायत' इत्याद्युक्तिराद्यवार्त्तिकाऽभिप्रायेण । अत उत्तरं पठतीति । भाष्यकृदवतारणिकया तस्य वार्त्तिककृत्सिद्धान्तत्वोक्तेः । उत्तरवार्त्तिक × द्वयन्त्वाचार्यदेशीयस्य, पूर्वत्र तदन्ताऽप्रतिषेधेऽप्युत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्याऽनुपपादनात् पूर्वत्र' इत्युक्तयसङ्गतेराद्यस्य तदुक्तित्वम् । अन्त्यन्तु भाष्य एव दूषितम् । तेनाऽऽद्यवार्त्तिकस्यैव वार्त्तिककृत्सिद्धान्तत्वम् । वार्त्तिककारीयसंज्ञोपसर्जनप्रतिषेधप्रत्याख्यानाय हि तत्र तदुक्तत्वात्प्रत्याख्यानसूत्रेणैवाऽत्रोपसर्जनप्रतिषेधव्याख्यानसम्भवादत्र तद्वृव्यर्थमिति तदाशयः । इदन्तर्हि प्रयोजनं प्रधानेनेत्यादि तु भाष्यकृतः सूत्रप्रयोजनप्रदर्शनेन वार्त्तिकप्रत्याख्यानमित्याहुः । ननु स्त्रीप्रत्ययान्तेन समासेऽपि समासस्य 'प्रत्ययग्रहण' परिभाषया स्त्रीप्रत्ययान्तत्वाऽभावात्कथं ततो ढगत आह स्त्रीभ्यो ढगिति । एवञ्च स्त्रीप्रत्ययान्तप्रातिपदिकाड्ढको विधानसामर्थ्येन 'प्रत्ययग्रहण' परिभाषा बाध्यत इति भावः । नन्वेवं सुपर्ण्यादिभ्यो ङयन्तेभ्यो ढक् न स्यात्, उभयत आश्रयणेऽन्तादिवत्त्वाऽभावाच्च बिनतादिभ्योऽपि न स्यादत आह ङया-

× 'वाक्य' इति के पाठः ।

वन्तेभ्य इति। अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावा-
दिदं सर्वं चिन्त्यम्। तस्मात् 'स्त्रीभ्य' इति सूत्रे 'प्रातिप-
दिकाद्' इति न संबध्यते इत्येव तत्त्वम्। अन्यथा 'ङ्याब्'
ग्रहणस्यैतदर्थमावश्यकत्वेन ङ्याप्सूत्रस्थभाष्यविरोध इति दिक्।
तत एवेति। वस्तुतोऽवयवस्याऽप्रातिपदिकत्वात्समुदायस्य चाऽण-
न्तत्वाऽभावान्ङीपोऽप्राप्तिरेवेति शङ्कितुमुचितम्, प्रधानेन तदन्त-
विधिना ज्ञापने तु नाऽनियमप्रसङ्गदोषोऽत आह यदा त्विति।
'विधीयत' इत्यनन्तरं तदेति शेषः। तत इति। कुम्भकारीशब्दा-
दित्यर्थः, 'नञ्' पाठे तु कारीशब्दादित्यर्थः। सत्यपि प्रधा-
नेन तदन्तविधौ शंकते ननु कदाचिदिति। नियमप्रतिषेधे-
नेति। अयं भावः, नियमेनाऽधिकस्यैव व्यावृत्तिर्न तु न्यूनस्य।
अत एव 'अस्याऽपत्यं युवा' इत्यर्थे 'अ' शब्दादिञि यस्येति
इञन्तात्फक्सिद्धिः। 'इयदेव इयत्मात्रम्' इत्यादौ वत्वन्तात्स्वार्थे
मात्रजादिसिद्धिः। एवञ्च तन्निषेध (धात्) तद्व्यावर्त्य-
स्यैव संग्रहो न्याय्यो न त्वतद्व्यावर्त्यस्य। नन्वसत्यपि
प्रधानेन तदन्तविधौ स्त्रीप्रत्यये तदादिनियमाऽभावात्, कुम्भेनै-
कार्थीभूतस्य निष्कृष्याऽपत्येनाऽनन्वयाच्च, तदन्तर्गतकारीशब्दस्य
सुबन्तत्वाऽभावाच्च समुदायादेव ढगादि भविष्यतीत्यत आह अथ
वेति। तदाश्रयणे तु व्यर्थमेवेदमिति ध्वनितम्। केचित्तु
कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसंबन्धित्वे विवक्षिते समासोत्प-
त्त्यनुकूलक्रियाश्रयसंबन्धित्वविवक्षाया अप्यनपायेन तस्याऽपि
प्रथमोच्चारितत्वाच्च भवेदेवाऽवयवादुत्पत्तिः, एकार्थीभावेऽपि
समुदायाऽर्थेनैकार्थीभावे प्रधानाऽवयवार्थेनाऽपि तस्य दुर्वार-
त्वात्। ध्वनितश्चेदं 'येन विधिः इति सूत्रे। भाष्येऽपीति। तत्रैव-
निरूपितम्। सुबन्तत्वन्तु न वचनेन निमित्तकोटौ प्रविष्टं,
किन्तु न्यायप्राप्तमिति भाष्याशयः। तत्र 'वृद्धि' दोषः प्रकृतो-

दाहरणे स्पष्ट यत्र, स्वरदोषस्तु यदा कुम्भकरणे नियुक्तः कुम्भं करोति तदा 'अणि नियुक्ते' इत्यनेन पूर्वपदाऽऽद्युदात्तत्वमिति । न च 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणतायाः प्रागुक्तत्वेन 'अनुपसर्जनाद' इत्येतद्व्यावर्त्त्याऽसम्भवेन ज्ञापितेऽपि कथं चारितार्थ्यम्, अनेनैव 'स्त्रियाम्, इत्यस्य तदन्तविशेषणताया अपि ज्ञापनात्, तस्य ङीप्प्रकृतिविशेषणताया न्याय्यत्वाच्च, स्वप्रकृत्यर्थे एव तदर्थाऽन्वयात् । एवञ्च 'बहुकुरुचरा' इति व्यावर्त्त्यम्प्रसिद्धम् । किञ्च, एवं सति 'आपिशला' इत्यप्येतद्व्यावर्त्त्यमेव, 'अनुपसर्जनाद्' इति तु गृह्यमाणविशेषणमेवेत्याहुः । भाष्ये जातेर्ङीषिति । 'जातेः इत्यनुवर्त्तमाने 'पाककर्ण' इति ङीष् विधाने इत्यर्थः । भाष्ये तस्य च शब्दस्य जातिवाचकत्वादित्यन्वयः । जातिवाचीति । औषधीजातिवाचीत्यर्थः । नन्वेवं 'जातेरस्त्री' इत्यस्याऽनुपसर्जनाऽधिकारे पाठो व्यर्थोऽत आह बहुकुक्कुटेति । कथं कृत्वेति । भाष्यस्योदाहरणविषयत्वभ्रमं निराकरोति नाऽस्त्युपेति ॥ १४ ॥

---

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाऽध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥

---

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।

## ( ४।१।१५ )

अन्तस्वरितमिति । तव्यतस्तित्त्वेन स्वरिताऽन्तत्वात् । तशब्दाऽकार इति । प्रत्ययस्वरेण कर्त्तव्यस्य मध्योदात्तत्वात् । अन्तद्यूरिति । धातोः साऽनुबन्धकत्वात । ऊठि कृते इति । बहिर्भूतविभक्त्यपेक्षौत्वोत्वाऽपेक्षया क्विबपेक्षत्वाद् 'ऊठ्' अन्तरङ्गः । दिव्शब्दस्येति । डिविप्रत्ययान्तस्याऽव्युत्पन्नस्य वेत्यर्थः । प्रसङ्गेनेति ।

न तु प्रकृते ढञो ग्रहणाऽनुपपत्तिप्रयोजिका सेत्यर्थः। स एवेति। सप्तपर्णादौ वीप्सावदत्र वृत्तावधारणस्याऽन्तर्भाव इत्यर्थः। अतदिति। अस्य तत्तद्भिन्न इत्यर्थ इत्याहुः। उपात्तेति। 'ऋदृशोऽङि' इति अनुवृत्तिप्रदर्शनार्थमेतत्। चङि नेति। 'विभाषा धेट्श्व्योः,' इति चङ्। 'जॄस्तम्भु' इति पक्षेऽङ्। ननु लोपाऽर्थं ङित्त्वमत आह यस्येतीति। एवञ्चेति। शब्दस्याऽर्थमाह यद्येत इत्यादि। अन्तोदात्तत्वं नेति। 'ययतोश्चाऽतदर्थे' इत्यनेन। नञ उत्तरयोर्यंयदन्तयोरुत्तरपदयोरसमासस्यान्त उदात्त इति तदर्थः। यज्ञसभायामिति। 'यज्ञ' इति प्रायश्चित्तादेरप्युपलक्षणम्, प्रायश्चित्ताऽऽदिविमर्शे याजनादौ च विदुषामेव साधुत्वेन योग्यतयाऽधिकारादिति भावः। वैदुष्यश्चोपनयनादिमतां पुंसामेवेति तात्पर्यम्। ङीन्विधानादिति। भाष्ये हिर्हेतावित्यर्थः। नन्वौत्स्या अपत्याऽर्थत्वे जातित्वमस्त्येवेत्यत आह भवेति। ननु भगिन्यामपि पुंयोगादेव 'वैद' शब्दस्य वर्तनात्कथं जातित्वमत आह अनेनेत्यादि। ननु 'शार्ङ्गरवादि' सूत्रे जातिग्रहणाऽनुवृत्तौ निरवकाशत्वान्ङीनः कथम्परत्वोक्तिरत आह परत्वेति। ननु तरुणतलुनयोः 'वयस्यचरम' इति ङीपः सिद्धेरुपसंख्यानं व्यर्थमत आह तरुणेत्यादि। स्वरे विशेष इति। उनन्तत्वाद्युदात्तत्वम्, ङीषि त्वन्तोदात्तत्वमिति विवेकः। तरुणी सुरेत्याद्यपि वयस आरोपात्प्रयोगः स्यादत आह अथ वेति ॥१५॥

---

## यञश्च ( ४।१।१६ )

अपत्ये भव इति। स च प्रतिपदोक्तपरिभाषया अपत्याऽधिकारस्थ एव गृह्यते। अत एव 'देवाद्यञञौ' इति यञि 'दैव्या' इत्यादौ न ङीबिति बोध्यम्। अत एव प्रत्याख्यानेन समफलता। ननु विच्छिद्य पाठे दोष एवेत्यत आह आर्षइति।

स तु व्याख्यातृकल्पित इति भावः । नन्वयञोऽभावात्कथं तदन्तान्ङीब्विधिरत आह तत्रेति । नन्वेवं गार्ग्यो न सिध्यतीत्यत आह तत्राऽकार इति । लुग्विधायकेऽकारप्रश्लेषं विनाऽपि सिद्धिं दर्शयति अथ वेति। एतेन 'संघाङ्कलक्षणे'इति व्याख्यातं, 'गोत्रचरणाद्' इत्यतो गोत्रग्रहणाऽनुवृत्तेः । तदनुबन्धकपरिभाषा तु अनित्यत्वेन भाष्यप्रामाण्यान्न प्रवर्त्तते, गोत्रग्रहणस्य तत्राऽनुवृत्त्या गोत्रे तदनुबन्धकयञोऽभावाच्चेति दिक् । 'अभिजिद्' इति ऽयञस्तु अस्त्रियां विधानान्न तद्विषये दोषः ॥१६॥

---

## प्राचां ष्फस्तद्धितः । (४।१।१७ ।)

ननु षित्वसामर्थ्यादप्रातिपदिकान्ङिषि धातोरपि स्यादत आह धातोरिति । धात्वर्थस्य स्त्रीत्वेनाऽयोगः । कृदन्ते त्ववयवे चारितार्थ्येन समुदायोपकारकत्वे मानाऽभाव इति भावः । एतच्च ✽ अत्राऽनुवृत्तेर्नान्तरीयकत्वञ्च । यद्यपि गौरादिग्रहणमितरप्रातिपदिकव्यावृत्त्यर्थं, तथाऽपि व्याख्यानादत्र तदसंबन्धेनैवोपपत्तौ 'तद्धित' ग्रहणं न कार्यमिति भाष्याऽऽशयः । अन्यथा । प्रातिपदिकाऽधिकाराऽभावे । समर्थेति । ततश्च दक्षयोरपत्यमित्यत्र न स्यादिति भावः ॥ १७ ॥

---

## सर्वत्र लोहितादिकतन्तेभ्यः । (४।१।१८ ।)

अपवादेति । बाधकेत्यर्थः । परत्वाद्धि चाप्प्राप्नोति बाधकविषयेऽपि प्राचां मते ष्फो यथा स्यादित्यर्थः । अत्रत्य 'सर्वत्र' ग्रहणेन कथं तल्लाभोऽत आह इहेति । सर्वत्रेति । अस्य बाधकविषयेऽपीति तत्राऽर्थः । ननु चाप्यपि 'लिङ्गविशिष्ट' परिभाषया

---

✽ एवञ्च इति ख पाठः ।

ष्फस्य सिद्धेः 'सर्वत्र' ग्रहणं व्यर्थमेवेति चेन्न, 'अत'. इत्यधिकारादिति दिक्। भाष्ये पूर्वोत्तरौ तदन्तादी इति। पूर्वो लोहितादिः शकलान्तः, उत्तरः कण्वादिः शकलादिरित्यर्थः। नन्वेवमप्युपसंख्यानमावश्यकं, कतकण्वयोर्मध्ये पठितस्य शकलस्य गणद्वयादपि प्रच्युतत्वादत आह तत्र कतस्येति। अन्तशब्दः समीपवाची। पदान्तत्वाद् 'अतो गुण, इत्यस्याऽप्राप्तेराह शकन्ध्वादीति। स्वरभिन्नानामिति। यद्यपीदं 'नपुंसकमनपुंसकेन' इत्यनेनाऽपि सिध्यति, तथापि 'कण्वादिभ्य' इत्येतत्साधारण्येनेदमेवोपन्यस्तम्। अत्राऽप्येकशेष इति। षष्ठीतत्पुरुषबहुव्रीह्योरिति भावः॥ १८॥

---

## कौरव्य * माण्डूकाभ्याञ्च (४।१।१९)

ननु पूर्वत्र 'तद्धित' ग्रहणप्रत्याख्यानात्कथम् 'आसुरायणी' इत्यत्र यस्येति लोपोऽत आह सूत्रपाठेति। एवञ्च तद्धितग्रहणमेवैतदर्थकस्य ज्ञापकमित्यर्थः। शेषेऽर्थ इति। इदञ्च भाष्योदाहरणस्थ 'कल्प' पदाज्ज्ञायते। ननु 'छ' प्रतिप्रसवस्येह का सङ्गतिरत आह इहैवेति। लाघवमेव दर्शयति अन्यथेति॥ १९॥

---

## वयसि प्रथमे (४।१।२०)

ये त्रीणीति। वार्त्तिकसम्मतत्वादिदमेव युक्तम्। ननु वयोविषयत्वेन वयोबोधकतया नैतानि वयोवाचीनीत्ययुक्तमत

* अत्र 'कौरव्या ब्राह्मणाः। 'चत्वारो वयमृत्विज' इति वेणीसंहार (१।२५।) प्रतिपादितो वर्द्धमानगृहीतः 'कौरव्यः क्षत्रियसामान्यवचनो न तु ब्राह्मणवचनः भीमवचनविरोधावदिति भ्रान्तो वर्द्धमान इति। सं०।

आह नैषामिति। बाल्ययौवनस्थाविररूपं वयो नैषां प्रवृत्तिनिमित्तमिति भावः। एतच्छब्दप्रतिपाद्यक्रियाकारकादिसम्बन्धाद्वयसोऽप्रतीतेराह विशेषणेति। प्रकरणादिसापेक्षाऽवधारणादिगर्भविशेषणविशेष्यभावादित्यर्थः। सर्वाऽपि कदाचिदुत्ताना शेते इति। सामर्थ्यादुत्तानैव शेते इत्यवधारणाद्याश्रीयते। तत्र प्रकरणाद्वृद्धत्वाऽभावे निश्चिते 'बाला' इति गम्यत इति तात्पर्यम्। नन्वेवं वयोऽवगतौ ङीप्स्यादेवेत्यत आह ततश्चेति। भाष्ये अत्राऽपि हि सम्बन्धादिति। पुरुषाऽसम्प्रयोगसम्बन्धादिति भावः। औत्पत्तिकादिति। स्वाभाविकादित्यर्थः। स हि साक्षात्सम्बन्धः। प्रथमं वय इति। पुंसि नस्यैव प्रवृत्तिनिमित्तत्वेन स्त्रियामपि तदेवेति भावः। साहचर्यादिति। यस्याः प्रथमं वयस्तस्याः पुंसाऽसम्प्रयोग इति सम्बन्धादित्यर्थः। शब्दसम्बन्धस्येति। शब्देन सम्बन्धो यस्येति बहुव्रीहिः। प्रमाणान्तरम्। प्रकारणादि। विशेषणेनेति। प्रकारणादिना प्रथमवयोविशिष्टायाः कर्त्रीत्वप्रतीतिरिति प्रकरणादिप्राप्तप्रथमवयोरूपेण विशेषणेन सम्बन्धादित्यर्थः। भाष्ये यदा कर्तृत्वमित्यादि। प्रत्ययाऽर्थो यदोपपदार्थधात्वर्थाभ्यां विशेषितस्तदा तद्विशेषणक प्रत्ययार्थस्य सामान्यतो बोधोत्तरम्प्रकरणादितो वयःप्रतीतिरित्यर्थः, उत्तानशयननिरूपितकर्तृत्ववतीति बोधादिति भावः। एवं बहुव्रीह्यर्थोऽन्यपदार्थो वृत्तिपदार्थविशेषणकः प्रथमं बुध्यते, ततोऽनन्तरं प्रकरणादितः स्वाभाविकरक्तपादत्ववती 'बाला' इति विशेषप्रतीतिरिति। भाष्ये द्विग्वर्थ इति। अस्य द्विगुनिमित्तप्रत्ययार्थ इत्यर्थः। प्रमाणान्तरम् प्रकरणादि॥ २०॥

---

## अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि ( ४।१।२२ )

तद्धितलुक्येवेति । एवं हि समाहारे न स्यादिति भावः । 'आगन्तूनामन्ते निवेश' इति न्यायेन स एवोचित इति तात्पर्यम् । द्व्याढकीति । द्वाभ्यामाढकाभ्यां क्रीतेति, द्वयोराढकयोः समाहार इति चाऽर्थः । परिमाणवाचित्वादिति । विस्तादीनां पृथग्ग्रहणादेवाऽत्र 'परिमाण' शब्देनोन्मानमपि गृह्यत इति भावः । विस्तादयः परिमाणविशेषा ❀ अपीत्याशय इत्यन्ये ॥ २२ ॥

---

## बहुव्रीहेरूधसो ङीष् ( ४।१।२५ )

ननु लिङ्गाऽधिकारे क्रियमाणे 'महोधा' इत्यादावूधसोऽनङ् दुर्वारोऽत आह ऊधसोऽनङिति । नश्चेति वक्तव्यमिति । न चैवमनो लाक्षणिकत्वाद् 'अ' लोपाऽनापत्तिः, अर्थवत्परिभाषावद् 'अन्' ग्रहणे 'लक्षणप्रतिपदोक्त' परिभाषाया अप्यप्रवृत्तेः । एतद्भाष्यप्रामाण्यादेवाऽनङादेर्ङित्त्वम्, हलन्तेभ्य आचार क्विबभावान्नाऽऽचारक्विबन्ते आत्मनेपदप्रयोजकमिति बोध्यम् । नन्वत्र पाठे 'धनुषश्च' इत्यत्राऽनङ् न लभ्येतेत्यत आह धनुष इति । कप्समासान्तेति । कब्रूपसमासान्तेत्यर्थः । द्वावत्रेति । अवस्थाप्रश्नद्वारेण कब्विशेषविषयः प्रश्न इति भावः । अनवकाशं स्यादिति । वाक्याऽवस्थायां कपः प्रवृत्त्या तदन्तस्यैव

---

❀ विस्तः सुवर्णकर्षः । आचितो दश भाराः । ( भाराः=बोरा ) । कम्बल्यम् ऊर्णापञ्चप्रस्थाः । ( कर्षः=तोला ) । प्रस्थः=शेर ) ( भार=भरा=भोरा=बोरा ) इत्यपभ्रंशप्रकार इति सं० ।

बहुव्रीहित्वाद्द्वयोऽन्तबहुव्रीहेरभाव इति भावः । ननु 'न हि सावकाशो ङीष्' इति वक्तव्ये न हि ङीष् विभाषेति कुत उक्तमत आह द्वयोस्त्विवति । नदीलक्षण इति । ननु ङीषि कृते तदन्तस्य बहुव्रीहित्वाऽभावाद्बहुव्रीह्यर्थकवाक्यत्वाऽभावाच्च 'नद्यन्तबहुव्रीहेः कब्' इत्यर्थेऽपि कथं *तत्प्राप्तिः, न च 'लिङ्गविशिष्ट' परिभाषया तत्प्राप्तिः, तथा च परिभाषया स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशो बोध्यत इति वाच्यम्, समासान्तविधौ लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकाद्' इति सूत्रे भाष्ये उक्तत्वेनाऽत्र तदप्राप्तेरिति चेन्न, तदनभ्युपगमेनैव पूर्वपक्षिणा प्राप्त्युद्भावनात्, समासान्तविधाववयवग्रहणे एव दोष इत्यत्रैव तद्भाष्यतात्पर्याच्च, समाससमुदायग्रहणे तत्प्रवृत्त्यप्रवृत्त्योः फले विशेषाऽभावाच्च । भाष्ये नद्यन्तानामिति । नद्यन्तप्रकृतिकसुबन्तोत्तरपदे इति भावः । अत एव 'करभोरुः' इत्यत्र न नित्यः कप् । भाष्ये परत्वादिति । उत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः ॥ २५ ॥

---

## दामहायनान्ताच्च ( ४।१।२७ )

न हि घट इति । फलाऽनुकूलत्वेन कृतेरपि सर्वधात्वर्थत्वादिति भावः । भाष्ये अचेतनेष्वपीति । कृत्याद्यारोपेण प्रयोग इति भावः । एवमेव 'रथो गच्छति' इत्याद्युपपत्तिः । एकयोगनिर्दिष्टानामेकदेशनिवृत्तौ बीजमाह शब्दानुमानेति । भाष्ये शालाया इत्यन्तः ईदृशेऽर्थे कथं प्रयोगेण भाव्यमिति प्रश्नः । द्विहायनेत्याद्युत्तरम् । वक्तव्यमिति । हायनाऽन्तो

---

* कथं तत्प्राप्तिरित्यत्र 'कथमप्राप्तिः' इति क्व पाठः ।

यो बहुव्रीहिः स वयसि गम्ये एव ङीषः प्रकृतिः शिष्टैः स्मृत इत्यर्थो भाष्यस्य ॥ २७ ॥

---

## रात्रेश्चाऽजसौ । ( ४।१।३१ । )

भाष्ये सर्वां रात्रिं सहोषित्वा पत्या एका त्रिशात्रिकाम् इति पाठः ॥ ३१ ॥

---

## अन्तर्वत्पतिवतोर्नुक् । ( ४।१।३२ )

जीवदिति । लोकव्यवहारादीदृशस्य योगस्य ❀ ग्रहणम् । अत एवाऽग्रे जीवत्पत्याश्चेति भाष्य उक्तम् । तत्र 'ङिति ह्रस्वश्च' इति पाक्षिकनदीत्वम् । ननु मतुप्युगिल्लक्षण ङीपो दुर्वारत्वेन कथं प्रत्युदाहरणत्वमत आह नुगभाव एवेति । भाष्ये उक्तमेव सामान्येनोपसंहरति एतस्मिन्विषय इति । एतस्मिन् विषयविशेष इत्यर्थः । नुक्पदोच्चारणकृत्यमाह मतुब्नत्वे इति ॥ ३२ ॥

---

## पत्युर्नो यज्ञसंयोगे ( ४।१।३३ )

पतिशब्दस्येति । नार्थस्येत्यर्थः । 'पत्नीसंयाज' × शब्दो यागविशेषस्य संज्ञा । पतिशब्दाऽर्थस्येति । तत्प्रवृत्तिनिमित्तस्यैश्वर्यस्येत्यर्थः । सूत्रे 'यस्य च भावेन' इति सप्तमी । यज्ञसंयोगे सति यदैश्वर्यं प्रत्यासत्त्या तन्निरूपितं तत्र वर्त्तमाना-

---

❀ 'ईदृशसंयोगस्य' इति के पाठः ।

× अयं यागो बौधायनशालिकिभ्यां महर्षिभ्यां द्वैधसूत्रस्य पञ्चमे खण्डे पञ्चदशेऽध्याये परिक्रमणान्तर्धानादिविषये विकल्पित इति द्रष्टव्यं बौधायनश्रौतसूत्रम् इति सं० ।

त्पतिशब्दादित्यर्थ इति भावः। यज्ञफलस्वर्गादिभोक्तृत्वाच्च यज्ञस्वामित्वं भार्याया बोध्यम्। सहाऽधिकारादिति। 'मद्भिलषितसाधनत्वा'न्मदर्थं कर्म' इत्येवंलक्षणेऽधिकारो भार्याया अप्यस्तीति मीमांसायां स्पष्टम्। कर्त्तृत्वादिति। यस्याऽधिकारस्तस्य कर्तृत्वादित्यर्थः। न तु शूद्रस्येति। विद्याया अभावात्तस्यैवाऽनधिकारे तद्भार्यायाः सुतरामिति भावः। ननु पञ्चमहायज्ञेषु शूद्राणामप्यधिकारोऽस्तीति चेन्न, शूद्रस्येत्यस्याऽसच्छूद्रस्येत्यर्थात्। सच्छूद्राणामेव तेष्वधिकार इति प्रसिद्धं स्मृत्यादिषु। अग्नीति। अग्निसाक्षिकपाणिग्रहणनिमित्तसादृश्यादित्यर्थः। इदमुपलक्षणम्, येषां तदपि नास्ति, तेषां सादृश्यान्तरं बोध्यम्॥ ३३॥

---

## विभाषा सपूर्वस्य। (४।१।३४।)

विद्यमानेति। 'सहैव पुत्रैर्दशभिः' इतिवत्। न त्विति। तथा सति पूर्वस्याऽपि नकारः स्यादिति भावः। तदाह न हीति। तत्र पतिशब्देति। प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्गृह्यमाणविशेषणताया एव सर्वत्र दर्शनाद् 'अनुपसर्जनाद्' इत्यादि तस्यैव विशेषणमिति भावः। ननु 'वृद्धपत्नी' इत्यादावपि समास उपसर्जनं न भवतीत्यत आह सर्वोपसर्जनेति। वस्तुतस्तूपसर्जनप्रत्ययवयवके समासे इत्यर्थः। अत एव 'अतिपत्नी' इत्यपि सिध्यति, सङ्कोचे मानाऽभावाच्च। अत एव प्रत्याख्याऽऽरम्भयोः सफलता। आशायाः पतिरिति। आशापतिलब्ध तत्पूरकत्वेन। तदेव पत्यन्तं प्रातिपदिकमेव। सपूर्वग्रहणेन चेति। विशेष्यत इत्यनुषङ्गः। ननु 'वृद्धपत्नी' इत्यादौ समासप्रातिपदिकात्पूर्वस्य कस्यचिदभावात्सपूर्वत्वाऽभा-

वेन प्रत्ययो न स्यादत आह पूर्वशब्दश्चेति । अत एव वाक्ये नाऽतिप्रसङ्गः । प्रत्ययविधौ तदन्तविधिप्रतिषेधादाह सामर्थ्या च्चेति । सत्पूर्वस्येति । विशेषणसामर्थ्यादित्यर्थः । विद्यमान-पूर्वाऽवयवकत्वस्य केवलपतिशब्देऽभावात्, पकाररूपाऽवयवस्तु अव्यभिचारीति तात्पर्यम् । लक्ष्यानुसारिव्याख्यानाच्च 'अनु-पसर्जनाद' इत्यपि तदन्तविशेषणम् । तदुक्तम् प्रत्यन्तादनु-पसर्जनादिति ॥ ३४ ॥

---

## पूतक्रतोरै च ।( ४।१।३६।)

अविशेषेण सर्वेषामुत्तरयोगानां ग्रहणमिति भ्रमं निराकरोति त्रय इति । लक्ष्याऽनुसारिव्याख्यानेनेति भावः । नन्वर्थधर्मस्य लिङ्गस्य लुकोऽसम्भवः, आगमाऽऽदेशैः सन्नियोगस्य चाऽसम्भ-वोऽत आह लिङ्गार्थे इति । यद्यपीति । सन्नियोगशिष्टानामन्यतरऽ-पाय उभयारप्यपायादिति भावः । अस्य न्यायस्य व्यभिचरितत्वं दर्शयति यथेति । अत्राऽऽनुक इति । 'इन्द्रवरुण' इति विहितस्येत्यर्थः । ऐकारस्य 'वृषाकप्यग्नि' इति विहितस्य । थुगागमः 'षट्कतिकतिपय' इति विहितः । ननु 'अन्तरङ्गा-नपि' इति न्यायेन लुग्विषये पूर्वमेवाऽप्रवृत्तिरत आह प्रत्ययल-क्षणेनेति । स न्यायस्त्वन्तरङ्गनिमित्तविनाशकविधिविषयः । न च प्रकृते तन्नाशः, प्रत्ययलक्षणेन सत्त्वादिति भावः । 'षड्' इति सूत्रे 'डड्' इत्यनुवृत्तस्य 'डट्' चेदस्तीत्येवार्थः, सप्तम्या विपरिणामे फलाऽभावादित्याशयः । 'डटि परत' इत्यपि वस्तुतस्तस्य परत्वादुक्तमिति बोध्यम् । ननु कनीति । डटम्प्र-त्ययलक्षणेनाश्रित्य भवन्तु न, 'न लुमता' तस्मिन्निति प्रत्यय-लक्षणनिषेधाद् ।

## वोतो गुणवचनात्। (४।१।४४।)

'अदेङ् गुण' इति परिभाषणात्किं प्रश्नेनेत्यत आह उत इतीति। वचनग्रहणाच्चेति। गुणवति द्रव्ये वर्त्तमानप्रातिपदिकलाभाय हि तत्। न चाऽदेङामेवंप्रकारः सम्भवतीति भावः। नन्वेवं संसर्गिभेदकं यद्यदितिलक्षितगुणग्रहणमस्त्वित्यत आह विशेषणस्याऽपि त्विति। अपि तु विशेषणस्य संसर्गिभेदकमिति लक्षितगुणस्य ग्रहणं प्राप्नोतीत्यन्वयः। द्रव्यमिति। 'सीदन्त्यस्मिन् जातिगुणक्रिया' इति व्युत्पत्तेः सदेरौणादिको 'व' प्रत्ययः। ततः पाकादिकारणान्तरवशाद् गुणान्तरोत्पत्तौ स गुणस्ततो द्रव्यान्निवर्त्तत इत्यर्थः। भिन्नजातीयेष्विति। घटपटादिष्वित्यर्थः। एतेन जातेरिति। इदमुपलक्षणम्। अनेन संज्ञाया अपि तत्त्वनिरासात्। न कदाचिदिति। नित्यत्वात्तस्या इति भावः। प्राणित्वमिति। यद्यपि प्राणित्वं प्राणसम्बन्धरूपं न जातिर्नाऽप्यखण्डोपाधिस्तथाऽपि तस्य जातित्वाऽङ्गीकारेणेदम्। इत्याहेति। इत्यत आहेत्यर्थः। आधेय इति। अस्याऽर्थ उत्पाद्य इति। एतेन नित्याऽनित्यवृत्तिजातिमत्त्वं लब्धं, नैव क्रियेत्याह क्रिया न्विति। अद्रव्यस्वभाव इति। द्रव्यभिन्न इत्यर्थः। द्रव्यादन्य इति। उत्तरलक्षणे उक्तेर्द्रव्यपदेनाऽत्र गुणाऽऽश्रय उच्यते। अत्रैवं व्याख्याने 'पृथग्जातिषु दृश्यत' इत्यनेन 'सत्त्वे निविशत' इत्यादिना वा जातेर्वारणे सिद्धेऽन्यतरवैयर्थ्याऽऽपत्तिः। किञ्च, क्रियावारकेणैव जातिवारणे सिद्धे उभयोरपि वैयर्थ्यम्। किञ्च, 'पृथग्जातिषु' इत्यनेन जातिवारणमशक्यं, भिन्नजातीयेषु घटपटादिषु द्रव्यत्वादिदर्शनात्। अन्यद्द्रव्यमिति। यथा कुसुम्भादिरूपं वस्त्रमायाति कुसुम्भश्च परित्यजतीत्यर्थः। पटुत्वा-

ह्यपि क्वचिदायाति क्वचिन्नश्यति, कस्यचित्पटोरपटुत्वस्याऽपटोश्च पटुत्वस्य दर्शनात् । पूर्वलक्षणेऽप्येवमेव व्याख्यातुमुचितम् । द्रव्येषु दृष्ट इति । पूर्वार्धेन संज्ञाया जातेश्च तत्त्वनिरासः । ननु गुणस्य वाचकत्वमनुपपन्नमत आह शब्दधर्म्मस्येति । अनेन लिङ्गक्रियाया गुणत्वनिरासः । अत्राऽपि पूर्वलक्षणवद्व्यर्थविशेषणताऽऽपतति । द्रव्याऽन्यत्वेन भावत्वोपलक्षणादभावनिरासः । अत्र वदन्ति, 'गुणो नाम' इति प्रश्ने नामैकदेशग्रहणं 'गुणवचनः क' इति प्रश्नः । अत एवोत्तरं 'वाचकः सर्वलिङ्गानाम्' इति यथाश्रुततयैव सङ्गच्छते । येषाञ्च शब्दानाम् 'आकडार' सूत्रे गुणवचनसंज्ञोक्ता, तेषामेवाऽत्र कथनम् । एवं हि द्वयोर्भाष्ययोरेकवाक्यता भवति । तत्र हि समस्तकृदन्ततद्धितान्तसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दस्य गुणवचनसंज्ञा कृता । तस्मादत्राऽपि विशेषणैस्तद्व्यावृत्तिरेव युक्ता । तथा हि । तत्राऽऽद्यपादेन संज्ञानिरासः । न हि संज्ञाजातिशब्दा द्रव्ये विद्यमान एव रक्तादिशब्दवत्कदाचिद्वाचकत्वेन प्रवर्त्तन्ते कदाचिन्नेति भवन्ति । 'जातिषु पृथग्दृश्यत' इत्यनेन सर्वनामनिरासः । यथा शुक्लादयः शब्दाः समाने शुक्ले गवि 'शुक्ल' शब्देऽश्वे 'कर्क' शब्दो, नैवं सर्वनामशब्दा नियतविषयाः । चार्वादयोऽपि क्वचिच् 'चारुः' इति क्वचिच् 'चारुतर' इति, नैवं क्वचित् 'सर्वतर' इति । 'आधेय' इत्यनेन संख्याशब्दनिरासः : न हि स रक्तादिगुणशब्दवद्द्रव्ये विद्यमानयत्नाऽऽधेयो यत्नाऽऽधेयाऽर्थक इत्यर्थः । अनेनैव जातिशब्दानामपि निरासः । अक्रियाज इति । अस्य क्रियाप्रतिपादकधात्वजन्य इत्यर्थः । तेन कृदन्तनिरासः । असत्त्वप्रकृतिरिति । अनेन सत्त्ववाचकप्रकृतिकभिन्नाऽर्थकेन समस्ततद्धितान्तयोर्निरासः । अत एव

'प्रकृति' ग्रहणं चरितार्थम्। उत्तरश्लोकेऽप्याद्यपादेन संज्ञा शब्दनिरासः। दृष्ट इति। अस्य पृथगिति शेषः। तेन सर्वनामनिरासः। तृतीयपादेन जातिनिरासः। न चाऽऽद्य-पादेन जातिनिरासः, नीचतत्तद्वर्णवृत्त्या सप्तमादौ ब्राह्मणत्वा दिनिरासात्, विश्वामित्रादौ तत्सम्बन्धाच्च। आविष्टलिङ्गा जाति-र्यल्लिङ्गमुपादाय प्रवर्त्तते 'उत्पत्तिप्रभृति आविनाशात् तल्लिङ्गं न जहातीति 'विशेषणानाञ्च' इति सूत्रे भाष्योक्तेस्तद्वाचकानां न सर्वलिङ्गवाचकत्वम्। अनेन संख्यानिरासोऽपि, विंशत्यादीनां सर्वलिङ्गत्वाऽभावात्। द्रव्यादन्य इति। अस्य द्रव्यवाचक-प्रातिपदिकप्रकृतिकादन्य इत्यर्थः, द्रव्यवाचकान्यप्रकृतिक इत्यर्थो वा। तेन समस्ततद्धिताऽन्तयोर्निरासः। द्वितीयपादस्थायि-नाऽधातुजत्वस्य संग्रहः। तेन कृदन्तनिरास इति। अत एवो-त्तरसूत्रे 'बहु' ग्रहणं चरितार्थम्। 'संख्याशब्दस्याऽगुणवच-नत्वाद्' इति कैयटव्याख्यानेऽपि 'आधेयश्च' इत्यादिना संख्या-वारणसम्भवात्। वस्तुतोऽत्रत्यमिदम्भाष्यमेकदेश्युक्तिः, व्या-ख्यालेशस्याऽप्यभावात्, उक्तरीत्या सिकताकूपवद्विशीर्णत्वाच्च, 'आकडार' सूत्रे स्वयमुक्तत्वाच्च,भगवताऽत्र नोत्तरितमिति भाति। ननु ङीप् ङीषोः को विशेषोऽत आह धान्ये निदितीति। वसु-शब्दः प्राशस्त्यगुणवाची। खरुः पाणिग्रहणोत्कण्ठावती॥४४॥

---

## पुंयोगादाख्यायाम्। ( ४।१।४८ )

क्लिष्टत्वात्सूत्राऽर्थं दर्शयति पुंसा योग इति। 'कर्त्तृकरण' इति समासः। हेतोरिति। हेतौ पञ्चमीति भावः। ननु प्रधानेन योगेन, स्त्रिया वा सम्बन्धः स्यादत आह अन्येनेति। तत्र नाऽऽद्य इत्याह गणकादय इति। अन्त्ये स्त्रिया आख्याया-मित्यत्र किं पुंयोगात्प्राक् तदाख्यायामित्यर्थ, उत उत्तरकाल-

मिति। नाऽऽद्य इत्याह स्त्रियाश्चेति। नाऽन्त्य इत्याह पुंयोगादिति। प्रसूतादयो हीति। पुंयोगहेतुकगर्भाधानोत्तरकालं, तन्निःसरणरूपप्रसवप्रवृत्तिनिमित्तत्वादिति भावः। नाचक्षते इति। ततो गर्भनिःसरणाऽभावादिति भावः। गर्भाधाननिमित्तकः 'प्रसूत' शब्दः पुंस्यपि, तथाप्युक्तप्रवृत्तिनिमित्तको न, पुंस आख्या नाऽपि गर्भाधाननिमित्तेन, प्रसूतशब्दवाच्यपुंयोग मात्रेणाऽस्य स्त्रियां प्रवृत्तिरिति भावः। गोपालिकादीनां प्रतिषेधप्रतियोगित्वाऽसम्भवादाह वाक्यशेष इति। नन्वत्र 'तृजकाभ्याम्' इति निषेधात्समासो दुर्लभः, शेषषष्ठ्या समासेऽपि 'आपः' सुपः परत्वादित्वं दुर्लभमिति चेन्न, शेषषष्ठ्या अपि तत्प्रकृत्यर्थस्य क्रियाजनकत्वात्कारकत्वमेवेति, तथापि सुबुत्पत्तेः पूर्वं समास इति नाऽऽपः सुपःपरत्वमित्यदोषात्। यथाकथञ्चित् कारकोपादानेऽपि कथञ्चित्कारकत्वमादाय सा प्रवर्त्तत इति, अत्रत्यभाष्याद् 'उपपदम्' इति सूत्रस्थभाष्याच्च ज्ञायते। पुंसीति। प्रस्थानादिक्रियायाः पुंधर्मत्वादिति भावः। उदाहरणयोः 'सुपि स्थः' 'चरेष्टः' इति टटौ। भाष्ये तस्येदमिति। सामान्ये नपुंसकम्। तत्कृतानिति। तस्येयमित्यभिसम्बन्धकृतानित्यर्थः। करणसाधन इति। तथा च 'स्नान' शब्दो गन्धतैलादिवचन इत्यर्थः। ननु तद्धितस्य विकल्पे षष्ठशब्द एव सम्बन्धमाचष्टे इति किं लुकेत्यत आह तद्धितस्येति। महाविभाषया वाक्यस्यैवाऽभ्यनुज्ञानादिति भावः। लक्षणया चेदृशेऽर्थेऽसाधुत्वम्, 'तत्सम्बन्धी' इत्यर्थेऽनुशासनेन प्रत्ययान्तस्यैव तत्सम्बन्धीत्यादि समासस्यैव वाऽसाधुत्वनियमादिति तात्पर्यम्। प्रतिविधानात् तत्समर्थाऽऽचरणात्। पञ्चभिर्हलैर्भूकर्षणस्यैकेनाऽसम्भवादिति भावः। भाष्ये भर्तृकृतानिति। भर्तृकृतपापकृतानित्यर्थः। तत्कृतानिति पाठेऽप्ययमेवार्थः। तथा च दाम्पत्य

लक्षण एव पुंयोगो भगवतोऽभिमतः केकयी देवकी रेवतीत्यादौ गौरादित्वान्ङीषिति तदाकूतम्। तथेति*। स्वामिदासयोः पाककर्त्तृत्ववत्स्त्रीपुंसयोः पापकर्त्तृत्ववच्च तयोः प्रस्थातृत्वमपीत्यर्थः। कथं पुनरन्यथाऽर्थेनाऽन्यार्थाऽभिधानमत आह सम्बन्धादिति। नन्वणि ङीब्विधानार्थमिदमित्यज्ञापकमत आह अणि हीति। भाष्ये अनीकारा इति। ईकाराऽप्राप्तियोग्या इत्यर्थः। प्रकृत्यर्थे पुंसीति। एवञ्च पुमाख्यायाः स्त्रियामवृत्तेः सूत्रवैयर्थ्यमेवेति भावः। ननु प्रसूतादौ 'ङीष्' व्यावृत्तये तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति चेन्न, व्याख्यानात्, पुंयोगादित्यस्य यः 'पुं' शब्दः स्वार्थयोगात् स्त्रियां वर्त्तत इत्यर्थकरणेन तद्वारणात्। नित्यो बाध इति। तथा च 'प्राष्ठ्य इमा' इत्यसाधु स्यादिति भावः। इदं चिन्त्यम्, सर्वथा बाधकल्पनाऽपेक्षया ईदृशे विषये तस्य वैकल्पिकत्वज्ञापनस्यैवौचित्यात्। तच्चेदं ज्ञापकं स्त्रीप्रत्ययङीष्-विषयमेवेति नाऽन्यत्र। अनया रीत्या प्रकृतिमात्रस्य साधुत्वमिति न पक्षयोः फलभेदः। परन्तु—'आख्यायाम्' इत्यस्योक्तार्थतात्पर्यग्राहकतया चारितार्थ्येन ज्ञापकत्वाऽसम्भवात्र इत्यरुचिर्वक्तुमुचिता। ननु पूर्वव्याख्यानेऽपि 'तस्येदम्' इति सम्बन्धस्यैवोक्तेः पक्षभेदोऽनुपपन्न इत्यत आह एतत्पूर्वके णेति। प्राष्ठीत्वस्य कथं साधुत्वमत आह भेदस्य त्विति। आरोप्यत इति। आरोपे च हेतवस्तात्स्थ्यादयः। शक्यताऽवच्छेदकप्रकारक एव लक्ष्यार्थबोध इति भावः। तत्प्रकारकप्रतीतिविशेष्यप्रसिद्धार्थत्वं मुख्यत्वम्। तादृशाऽप्रसिद्धार्थत्वञ्च गौणत्वम्। अत्र बालेष्विति। मुख्यमञ्चपदार्थस्याऽचेतनत्वेन हसनकर्त्तृत्वाऽसम्भवादित्यर्थः। ताद्धर्म्यादिति। शौर्यादियोगान्माणवक-

---

* यथेति कैयटे पाठः।

वाही ❀कयोः सिंहत्वगोत्वाऽऽरोप इति भावः। गोत्वाऽनुषङ्ग इति। गोत्वसम्बन्ध इत्यर्थः। नन्वन्यधर्मस्याऽन्यत्र कथं सम्बन्धोऽत आह निमित्तादिति। शौर्यादिरूपादित्यर्थः। विपर्यस्तमिति। अन्यत्र विद्यमानमर्थरूपमन्यत्राऽऽरोपितमित्यर्थः। स्वार्थे गोत्वे। कैश्चिदिति। अस्य पातञ्जलैरित्यर्थः। सामीप्याद्गङ्गायां घोषः। अत्र तीरे सामीप्याद्गङ्गात्वाऽऽरोपः गङ्गासम्बन्धितीरे लक्षणयान्तु 'तस्येदम्' इत्यणन्तस्यैव तत्राऽर्थे साधुत्वेनाऽसाधुत्वम् †। एवं मत्वर्थादिलक्षणायामपि प्रकृतेरसाधुत्वम्। साहचर्यञ्च सम्बन्धमात्रोपलक्षणम्। अत्र पक्षे पुंयोगहेतुकस्त्रीवृत्तित्वाऽभावादाह पुरुषगताया वेति। आरोपे निमित्तञ्च तत्साहचर्यम्। बाध्येतेति। अबाधेनोपपत्तौ बाधो न न्याय्य ×इति भावः। ननु तदबाधाय परिभाषायाः करणे गौरवमत आह परिभाषा चेति। शस्य। 'पाघ्रा' इत्यादिना विहितस्य। वस्तुतो जिघ्रादेशस्य तेन प्रतिषेध इति शप्रत्ययान्त एव व्याघ्रशब्द इति बोध्यम्। घ्रशब्दमात्रमिति। किन्तु 'व्याघ्र' शब्द इति भावः। सूकर्यादिरिति। सूतेः करगिति मत इदम्। प्रोष्ठीत्यादिरिति पाठान्तरम्। प्रोष्ठी सूकरीत्याहुः। अभीक्ष्णमिति। तच्छीलस्याऽप्युपलक्षणम्। स्वाथिकत्वादिति। एवञ्चाऽत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेव प्रवृत्तिरिति भावः।

---

❀ बाहीकः=पञ्चालः 'पञ्जाबो' इति भाषा। पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः। बाहीका नाम ते देशा न तत्र दिवसं वसेद्' इति कर्णपर्वणि भारतोक्तेः। सं०

† 'तत्रार्थे साधुत्वम्' इति रवे पाठः।

× 'बाधोऽनन्यार्थ' इतिके पाठः।

अन्यथा तस्याऽपि सुबन्तादुत्पत्तौ पूर्वं सुपि इनुगणन्तत्वरूपाधिकपदार्थस्याऽपेक्षतया बहिरङ्गाऽणुप्रत्ययादन्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणि रूपसिद्धौ भाष्यमसङ्गतमेव स्यात्। भाष्योक्तः स्वरदोषस्तु 'व्यावक्रोशी*' इत्यत्र प्रथमं तद्धिते तदन्तेन समासेऽन्तोदात्तं स्यात्। समासोत्तरमणि तु आद्युदात्तमिति बोध्यम्। विशेषाऽपेक्षत्वादिति। इनुगणन्तत्वरूपाऽधिकपदार्थाऽपेक्षत्वादित्यर्थः। बाध्यत इति। नन्वियं तदप्राप्तविषयसङ्ग्राहिका, अत एव 'अपिना' तदर्थस्याऽपि संग्रहः परिभाषायामिति चेन्न, गत्यादिसमवधाने बाधिकैव तस्या इत्याशयात्। अपिस्तु गत्याद्यभावे तावन्मात्रस्याऽपि ग्रहणाऽर्थ इति भावः। न तु प्रातिपदिकत्वमिति। 'प्रत्ययग्रहण' परिभाषया कृदन्तत्वाऽभावादिति भावः। 'अर्थवत्' सूत्रेणाऽपि नेत्याह तत्र समासेति। भाष्य इतर आह कृत्त्वादिति। तदेव विवृणोति ननु चेदानीमिति। एतया परिभाषयेहेति। 'कृद्ग्रहण' परिभाषयेत्यर्थः। सुपो लुक् प्रसज्येतेति। तद्व्यावृत्तये समासग्रहणकृतनियमेन परत्वात्कृदन्तत्वप्रयुक्तसंज्ञाया अपि बाधोऽवश्यं वाच्यः। एवञ्च फलाऽभावान्नैतत्परिभाषोपस्थितिस्तत्रेति भावः। सिन्नित्यसमासयोरिति। नित्यग्रहणाऽभावेऽपि समासे प्रतिषेधः प्राप्नोतीत्यपि बोध्यम्। प्रतिषिध्येतेति। स्वरेऽपि विशेषो बोध्यः समासाऽसमासयोः। तथा च प्रकृतिभावः समासप्रयोजनं, तथा विशेषणाऽनन्वयःसंख्याभानाऽभावे इत्यपि बोध्यम्। पदव्यपदेशोऽस्तीति। समुदायस्येति शेषः। न तूत्तरपदेति। उत्तरखण्डस्येति शेषः, समासाऽभावादिति भावः। तस्मादिति।

* जनद्वयस्य परस्पररोदने, भटानामपरस्पराह्वाने च 'व्यावक्रोशी' प्रयुज्यते इति सं।

# संस्कृतगवेषणा ।

—:०:ॐ:०:—

अयि सहृदयाः

तत्रभवतां सर्वेषां सन्निधे मदीयेयमभ्यर्थना यत्सादरमियं संस्कृतगवेषणा भवद्भिर्देवभाषोन्नत्यै अङ्गीकर्त्तव्येति । इयं गवेषणा महता परिश्रमेण व्यावहारिकान् पारिभाषिकशब्दान् शब्दतः परिचितानर्थतोऽपरिचितानन्विष्याऽन्विष्य प्रथमपरीक्षार्थिनां छात्राणां कृते मया विरचिता । अस्यामतीवोपकारकाः शब्दाः सन्निवेशिताः सन्ति ये विदुषोऽप्यानन्दयन्ति । कौमुदीपरिपठितान्युदाहरणानि यावच्छक्यं 'ध्रुवका, अत्रका, नदालम्, कुलिज इत्येवमादीनि सम्यगर्थतो विशदीकृत्यलिखितानि सन्ति । यदि संस्कृतभाषासंबन्धिव्यवहारनैपुण्यमभिवाञ्छन्ति तत्रभवन्तस्तर्हि स्वस्वविद्यार्थिषु मदीयगवेषणायाः श्रीमद्भिः प्रचारः कर्त्तव्यः । मूल्यम् आणकपञ्चकम् ।

बालगोविन्दशर्मा वैद्यः

महावीर औषधालय,

ज्ञानवापी बनारस ।

## उद्योतनियमः ।

—:*:०:*:—

अयमुद्योतः प्रतिमासं द्वात्रिंशत्पृष्ठात्मको निःसरिष्यति । भविष्यति मुद्रापट्कं वार्षिकं मूल्यमस्य मुद्रणकर्मणि परिसमाप्ते । ये च मुद्रणकाले ग्राहकश्रेण्यां स्वस्वनामानि लेखयिष्यन्ति तैस्तु सार्धचतुष्कमेव वार्षिकं मूल्यं देयं भविष्यति । अतो मुद्रणमध्ये एव सर्वैर्ग्राहकैर्भवितव्यम् इति ।

निवेदकः—

बालगोविन्दशास्त्री

(महावीर औषधालय, ज्ञानवापी बनारस ।)

